गतिः इत्यादयो बहवो ह्यर्थाः यथायथं सप्रमाणं भगपदवाच्यतया हंसयोगिप्रभृतिभिः समुद्धृता विस्तरभिया न प्रदर्श्यन्ते । एतादृशार्थसमुदयवैशिष्ट्यमपि योगब्रह्मविद्यायां सङ्घटते । इत्थं च दर्शनान्तरविलक्षणतया ह्यस्मिन्दर्शने प्रवृत्तिगतिः (दक्षिणायनरूपा), निवृत्तिगतिः (उत्तरायणात्मिका), शुद्धगतिः (परायणस्वरूपा) इति भगवच्छब्दार्थविशेषसमभिव्यञ्जितास्तिस्रो गतयः समुपलभ्यन्ते । तासां च प्रकारभेदान् किञ्चिद्विचारयामः। यथा—प्राकृतदृष्ट्या ज्ञानसङ्कल्पकर्मस्वरूपसंसारव्यवसायिभिर्ये पुनर्वर्णाश्रमनियतधर्माः स्वर्गादिकामनयानुष्ठीयन्ते, ते प्रवृत्तिगतिगोचराः। ये च पुनस्तैरेव निश्शेषसुदूरनिस्सारितप्राकृतधर्मगन्धैरात्मदृष्ट्यात्मस्वरूपानुरूपा धर्मास्तादृशसंसारनिविवर्तयिषयानुष्ठीयन्ते, ते निवृत्तिगतिगोचराः । ये च पुनस्तादृशैस्त्रिभिरधिकारिभिः शुद्धदृष्ट्या 'सर्वं तत्खल्विदं ब्रह्म, सर्वमावश्यकं, सर्वं ब्रह्मस्वभावजम्' इति योगव्यवसायेन समनुष्ठेयाः ब्रह्मसामीप्यलक्षणपरप्राप्तिकामनया भवन्ति, ते शुद्धगतिगोचराः। एवं समुपपादितानां तिसृणां गतीनां यथाक्रमम् 'इडा, पिङ्गला, सुषुम्ना, अनात्मा, आत्मा, ब्रह्म, अकारोकारमकाराः' इत्यादयो नानाप्रकाराश्च हंसयोगिभिः शुद्धधर्मसमयसिद्धान्ततया भवन्ति समभिवर्णिताः। तस्मादस्मिंश्च शुद्धदर्शने श्रीभगवद्गीतामोक्षगीताध्याये चैकादशे—

**" शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ १९ ॥**

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २० ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २१ ॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २२ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ २३ ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः" ॥ २४ ॥

इति भगवदुपदिष्टानां च षण्णां श्लोकानां हंसयोगिविरचितभाष्यार्थं च गतित्रयप्रतिपत्तये हि संगृह्णीमोऽत्र संक्षेपतः । तथा हि—ये च पुनरात्मदृष्ट्या निवृत्तिपथगा ज्ञानिनः आत्मविद्यापराश्चात्मानं समुपासते, ते च "अग्निर्ज्योतिरहः शुक्लः" इत्यादिश्लोकप्रतिपाद्यया शुक्लया गत्या पथा चोत्तरायणेन ब्रह्मलोकं हि समभिगच्छन्ति, तेऽपि च पुनरावर्तन्ते भूतपूर्वं च संसारमण्डलम् । ये च प्रवृत्तिपथगाः प्राकृतदृष्टिमन्तः प्राकृतविद्यापराः कामिनश्च तत्तद्देवतोपासकाः कर्माणि चेष्टापूर्तादीनि समाचरन्ति, ते पुनः "धूमो रात्रिस्तथा कृष्णः" इत्यादिभगवदुपदेशप्रतिपादितया कृष्णया च गत्या दक्षिणायनेन च पथा स्वानुष्ठिततत्तत्कर्मफलभूतं स्वर्गादिलोकं च संप्राप्य क्षीणे च तत्कर्मबले स्वभूतपूर्वसंसारव्यवसायवासनया हि तदेव संसारमण्डलं च पुनरपि नि-

वर्तन्ते। हे पार्थ, योगी—शुद्धगत्या तदनुरूपयोगब्रह्मविद्यानिष्ठः, कश्चन—कोऽपि, एते सृती—निवृत्तिप्रवृत्तिरूपे चोत्तरायणदक्षिणायनगती, जानन्—'साक्षात्परप्राप्त्यनुपायस्वरूपे' इति विजानन् सन्, न मुह्यति—तद्गतिद्वयविषयकं च मोहं न प्राप्नोति। तस्मात्—सुकृतदुष्कृतफलोन्मेषनिमेषस्वरूपकालकल्पितगत्योः सर्वथा बन्धहेतुत्वात्, हे अर्जुन, सर्वेषु कालेषु-तदुपपादितस्वरूपेषु, योगयुक्तः—योगब्रह्मविद्यानिष्ठो विद्यया तया स्वहार्देश्वरं परप्राप्तिविरोधिसर्वकर्मबलध्वंसिनं च वासुदेवं समुपासीनः, भव-सर्वं ब्रह्मस्वभावजम्, इत्यादिशुद्धयोगब्रह्मविद्यामहावाक्यमनुसन्दधानो भवेत्यर्थः। कुतः, इत्यत्राह—आब्रह्मभुवनादिति। अत्र हि भगवता पूर्वार्धेन—ज्ञानभक्तिकर्मनिष्ठानां निवृत्तानां प्रवृत्तानां चाधिकारिणां पुनरविशेषेणाशुद्धस्वरूपत्वात्तत्पथयोश्चापि पुनरावृत्तिहेतुत्वमभिहितम्, उत्तरार्धेन तु-शुद्धदृष्ट्या योगेन (शरणागत्यपरपर्यायेण) शुद्धं ब्रह्म ये च समुपासते, न तेषां परप्रेप्सूनां च मुक्तानां भूतपूर्वसंसारमण्डलप्रवेशश्च भवति, इत्युपदिष्टमिति विज्ञायते। पुनस्तदेव मोक्षगीताचरमश्लोकेन तदध्यायसंग्रहार्थव्याख्यानपरेण च दृढीकरोति "मामुपेत्य" इत्यादिना। अत्र च योगब्रह्मविद्यानिष्ठाश्च ये महात्मानो दैवीप्रकृतिभाविताः, न तेषां पुनरावृत्तिशङ्का, इति। विशिष्टाद्वैतसिद्धान्तेऽपि सर्वाभ्यो ब्रह्मविद्याभ्यः प्रारब्धादिसकलकर्मापनोदनद्वारा निश्शेषसंसारनिवृत्तिपुरस्सरं च क्षिप्रफलप्रदतया सर्वोत्तमया ज्ञानभक्तिकर्मभ्यस्तुरीयया चरमया परप्राप्त्यु-

पायभूतया नाथमुनिप्रभृतिभिः पूर्वाचार्यैः संसेवितया योगापरपर्यायया च शरणागत्या ब्रह्म समुपासमानानां प्रपन्नानामित्थम्—

"सत्सङ्गाद्भवनिस्स्पृहो गुरुमुखात् श्रीशं प्रपद्यात्मवा-
न्प्रारब्धं परिभुज्य कर्मशकलं प्रक्षीणकर्मान्तरः।
न्यासादेव निरङ्कुशेश्वरदयानिर्लूनमायान्वयो
हार्दानुग्रहलब्धमध्यधमनीद्वाराद्बहिर्निर्गतः॥"

इति, वात्स्यवरददेशिकानुगृहीतया च दिव्यसूक्त्या हि न्यासादेव प्रारब्धानादिसिद्धानामपि कर्मणामञ्जसा निबर्हणेन हार्दान्तर्यामिभगवच्छ्रीमन्नारायणकृपालब्धं च ब्रह्मसायुज्यं पुनस्संसिध्यति, इति प्रपञ्चितम्। एवमद्वैतदर्शने च—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥"

इति श्रीभगवदुपदिष्टश्लोकद्वये च श्रीशङ्कराचार्यभाष्ये तट्टीकायां च "ईश्वरः" ईशनशीलो नारायणः सर्वान्तर्यामी, 'हृद्देशे' अन्तःकरणे, तिष्ठति, हे 'अर्जुन' हे शुद्धान्तःकरण, इति, तमेव, शरणमाश्रयं, संसारसमुद्रोत्तरणार्थं, 'गच्छ' आश्रय, 'स्थानं च' मम विष्णोः परमं पदं, प्राप्स्यसि, इत्याद्यर्थविमर्शनेन "दर्शितयोगमार्गः" इति मुण्डकोपनिषद्भाष्यार्थपर्यालोचनेन च, योगपदार्थः शरणागतिरेवेति, तथा शरणागतिसमनन्तरकाले परमपदप्राप्तिविधानेन तृतीया च शुद्धगतिरपि परायणापर-

पर्याया, शुद्धदर्शने भगवद्भक्तियोगिसमुपपादितरीत्या दर्शनद्वयेऽपि समभिव्यज्यत इति शक्यते विज्ञातुम्। इयांस्तु विशेषः—शुद्धधर्मसमये पुनः शरणागत्यैव हृत्पुण्डरीकनिलयमेव भगवन्तं नारायणं च समुपास्य "ब्रह्मविदाप्नोति परम्" "स याति परमां गतिम्" इत्यादिश्रुतिभगवद्गीताद्युक्तरीत्या परायणगत्या ब्रह्मसामीप्यलक्षणं च फलं प्राप्नुवन्ति शुद्धगतिप्रवणाः। विशिष्टाद्वैतिनां मते तु-सर्वेऽपि ब्रह्मविद्याधिकारिणः शरणागत्यैव यथास्वस्वरूपानुरूपं हृत्पुण्डरीकमध्यवर्तिनमन्तर्यामिणमर्चास्वरूपिणं वा श्रीमन्नारायणं समुपास्य कृत्स्नमपि प्रारब्धकर्म च विधूय परमपदं प्राप्नुवन्ति, इति। विशिष्टाद्वैतसिद्धान्ते चैवं संस्थिते, कतिपयैरिदानीन्तनैश्च सर्वचेतनकोटिसमुज्जीविकां च शरणागतिं हि स्वशरीरजीविकां सर्वेषां प्रपत्त्यनुष्ठानव्याजेन समाचरद्भिरत एव च कुक्षिम्भरिभिः 'प्रपन्ना न केनापि कर्मणा लिप्यन्ते' इति समुद्घुष्य दोषभोग्यत्वबुद्ध्या कश्मलकर्म कुर्वद्भिः वाङ्मात्रेण 'स्वयं प्रपन्नाः' इति जोघुष्यमाणैः, शरणागतिस्वरूपरहस्यम् 'इदमित्थम्' इति सर्वथा चाविजानानां कश्मलकर्मसमाचरणे निरङ्कुशप्रवृत्तीनां प्रपत्तेः पूर्वं सुवृत्तानां पश्चाच्च दुर्वृत्तानामनाघ्रातार्तिगन्धानां प्रपत्तिसमाचरणसमनन्तरमेव दुष्पथप्रवृत्तिं स्वानुष्ठानेन कारयद्भिः प्रपन्नंमन्यैः पुण्यजनैरीदृशकालगत्या निश्शेषसुदूरनिस्सारितप्रपत्तिप्रभावैश्च समाचरितपापकर्मफलपरिणतिरेव पूर्वाचार्यसंसेवितशरणागतिविद्यासारानुपलब्धिरेवेत्यलमत्र विस्तरेण, इति।

## पञ्चमपुरुषार्थसमर्थनम्

लोके हि "धर्मार्थकाममोक्षाश्च पुरुषार्था ह्युदीरिताः" इत्यग्निपुराणवचनानुरोधेन चत्वार एव पुरुषार्था इति सर्वजनीनोऽयं व्यवहारश्च सर्वतन्त्रसंप्रतिपन्नो भवति। परं तु शुद्धधर्मसमये धर्मार्थकाममोक्षातिरिक्तः प्राप्तिरूपोऽयं पञ्चमः पुरुषार्थः, इति प्रतिपदोक्ततया च जोघुष्यते। दर्शनान्तरेषु च प्रकारान्तरेण यथाकथञ्चित्पुरुषार्थपञ्चकं च कण्ठोक्ततया च जरीजृम्भ्यते। विशिष्टाद्वैते तु समभिव्यज्यते च शुद्धधर्मसिद्धश्च पञ्चमः पुरुषार्थः प्राप्तिरूपः। अत एव कुमाराचार्याश्च श्रीभगवद्गीतया मोक्षातिरिक्तब्रह्मसामीप्यलक्षणप्राप्तिरूपपञ्चमपुरुषार्थवर्णनेन तद्विशिष्टस्य महाभारतस्य पञ्चमाम्नायतां समभिप्रयन्ति। कतिपये च "भारतः पञ्चमो वेदः" इति श्रुत्या "एकतश्चतुरो वेदान् भारतं चैकतः स्थितम्" इति महाभारतवचनेन च साक्षादेव पञ्चमवेदत्वमुद्घोषयन्ति। "मृत्युर्धावति पञ्चमः" इति श्रुत्या "दैवं चैवात्र पञ्चमम्" इति श्रीभगवद्गीतोक्त्या च भगवतः पञ्चमत्वेन तत्समुपदिष्टयोगब्रह्मविद्यास्वरूपचतुर्विंशतिगीतात्मकभगवद्गीताविशिष्टतया च महाभारतस्य पञ्चमश्रुतिस्वरूपत्वं हि समर्थयन्ति शुद्धसत्त्वस्वभावा भरद्वाजाचार्यादयः। एवं पञ्चमोऽपि पुरुषार्थो भगवद्भक्तिकाष्ठाभिमर्शिनि च चैतन्यदर्शने चैतन्यचरितामृते "अत एव धर्मादिश्चतुर्वर्गः पुरुषार्थः। भक्तियोगस्तु पञ्चमपुरुषार्थः, इत्यत आह तृतीयस्कन्धकपिलवाक्येन स एवेत्यादि। भक्तियोगा-

ख्य आत्यन्तिकः परमपुरुषार्थ उदाहृतः कथितः नारदेनेति शेषः" इति १सनातनरूपगोस्वामिभिरपरिमितमितिभिः, एवम् "भक्तिः पञ्चमोऽपि पुरुषार्थः समुदीरितधर्मार्थकाममोक्षातिरिक्तः" २ इति चैतन्यकृष्णोपासनापरे सिद्धान्तरत्नतद्भाष्यपीठके गोविन्दस्वामीये प्रमाणपद्धत्यादौ च प्रपञ्चितम् । तथा शाक्तदर्शने "३श्रीशम्भुनिर्णयेऽपर्णे पञ्चवर्गाप्तिदायके" इत्यत्र पार्वतीपरमेश्वरसंवादे तद्व्याख्याता शिवानन्दनाथेन नित्यानन्दनाथशिष्येण "स्वाराज्यहाटकेशानमृज्जीवन्मुक्तिसाधनम् इति । अत्र स्वं, स्वर्गः धर्मः राज्यमर्थः, हाटकेशानः कामः, मृत् मृतमुक्तिः, जीवन्मुक्तिश्चेति पञ्च पुरुषार्थाः" इति समुद्घोषितम् । एवञ्च यथाकथञ्चित्पुमर्थचतुष्कातिरिक्तं यं वा कं वा पञ्चमं पुरुषार्थं कतिपये समभ्युपयन्तीति, चत्वार एव पुरुषार्थाः प्रामाणिकाः पौराणिका इति नियमनिर्बन्धो न खलु मनोमञ्चबन्धमधिरोढुमर्हति मतिमताम् । विशिष्टाद्वैतसिद्धान्तप्रवर्तकाचार्यानुगृहीतार्थपञ्चकमञ्चारोहणे तु समभिव्यज्यते सुमतिदर्शिभिः कुमतिकर्शिभिर्विमर्शिभिः कृते चपरिशी-

---

1. Vide Page 122 of tne work described under R No. 3013 of the Triennial catalogue Vol. III-Part I—A Shelf, No. (f 37. 23b).
of the Govt. Oriental Mss. Library Madras.

2. Vide the workdescribed under R No 2989 of the Triennialcatalogue Vol. III. Part I—A. Shelf No (T. 36. 49). of the Govt. Oriental Mss. Library Madras.

3. Vide Pages 134 and 135 of the work described under R. No. 3203 of the Triennial-catalogue Vol. III. Part I-B. Shelf No (T. 38. 58.)
of the Govt. Oriental Mss. Library Madras.

लने। तथाहि-अर्थपञ्चकं नाम 'स्वस्वरूपम्, परस्वरूपम्, उपायस्वरूपम्, विरोधिस्वरूपम्, पुरुषार्थस्वरूपम्' इति विज्ञायते। तत्र स्वस्वरूपं नाम शेषत्वम्, तच्च दासधर्मस्वरूपमेव। तदभिव्यक्तः स्वधर्म एव स्वस्वभावस्वरूपसमुचितो धर्मो भवति। ततः परस्वरूपं भवति सर्वेश्वरस्वरूपम्। तदभिव्यक्तो भवत्यर्थः। अर्थ्यमानत्वादर्थिभिः। ततश्चोपायस्वरूपम्, तच्च शरणागतिस्वरूपम्। तदभिव्यक्तो भवति कामः, उपास्यपरप्राप्तिरूपफलकामनाप्रयोजककामनाविषयत्वात्। विरोधिस्वरूपं च देहात्माभिमानरूपम्। स्वनिरासकत्वेन तदभिव्यक्तो मोक्षः। स च परप्राप्तिरूपफलप्रतिबन्धिनिश्शेषसंसारबन्धनिवृत्तिरूपः, तस्य तुरीयपुरुषार्थतायां बाधाभावात्। ततः पुरुषार्थस्वरूपम्। तदेव प्राप्तिस्वरूपं फलं च पञ्चमः पुरुषार्थः, इति तु निर्विचिकित्समत्सरैर्विद्वद्भिः समुद्भावनीयम्। अत एव[1] मन्त्रार्थकारिकामालिकायां नारायणसूरिभिश्चेत्थम्—

"श्रीकूरकुलकन्दाडवंशवार्धिसुधाकरम्।
रघुनाथार्यजं वीरराघवार्यं भजाम्यहम्॥
अष्टाक्षरमनावाद्यपदत्रयविभागतः।
शेषत्वं पारतन्त्र्यं च कैङ्कर्यं प्रतिपादितम्॥
प्रणवोक्तमात्मरूपं विरोध्युपायौ नमःपदेनोक्तौ।
नारायणायपदयोः प्रथितौ च परस्वरूपपुरुषार्थौ॥

---

1. Vide the workdescribed under R No. 160(n)of the Triennial catologue Vol. I. Part I-A Shelf No. (O.-3. 3.) of the Govt. Oriental Mss. Library Madras.

एवं प्रतिपादितेऽर्थपञ्चके प्रत्येकमेकैकार्थस्य पञ्चविधत्वं यथा—

नित्या मुक्ताश्च बद्धाश्च केवलाश्च मुमुक्षवः ।
एवं पञ्चविधा जीवा विद्वद्भिः परिकीर्तिताः ॥

हरिः परो व्यूहवासी विभवोऽन्तर्नियामकः ।
अर्चारूपः पञ्चधेति विद्वद्भिः परिकीर्तितः ॥

धर्मश्चार्थश्च कामश्च स्वात्मानुभव एव च ।
लाभो भगवतश्चेति पुरुषार्थस्तु पञ्चधा ॥

कर्म ज्ञानं च भक्तिश्च प्रपत्तिश्च तथा परा ।
सदाचार्याभिमानश्चेत्युपायः पञ्चधा स्मृतः ॥

विरोधि स्वस्वरूपस्य स्वरूपस्य परस्य च ।
पुरुषार्थस्वरूपस्य विरोधि तदनन्तरम् ॥

उपायस्य स्वरूपस्य प्राप्तेश्चैव विरोधि च ।
इति पञ्चविधं ज्ञेयं स्वरूपं तु विरोधिनः ॥"

इति पञ्चविधतयैव पुरुषार्थाश्च भवन्ति समभिवर्णिताः । तस्मा-द्युज्यतेऽस्मिन्शुद्धधर्मदर्शने पञ्चमपुरुषार्थसामञ्जस्यमिति कृतं पल्लवितेन ।

अत्र च पुनरवधेयमुपादेयं च किञ्चिद्वस्तुतत्त्वं शुद्धधर्म-समयसिद्धान्तरहस्यपारस्य शुद्धधर्मदर्शनबद्धादरैर्महाशयैः । तथा हि—ये च पुनरत्र विप्रतिपद्यन्ते ह्यदसीयदर्शनसत्तायां तदनादि-

सिद्धतायां तत्प्रामाण्ये च गृहीतग्राहिणः 'केवलं पितृचरणैरनुगृहीतः, स्वामिभिरनुगृहीतः' इति संप्रदायरहस्यार्थविशेषं च स्वीयगोष्ठीष्वनुपदं जोघुष्यमाणाः, स्वसमयसंप्रदायसारासारपर्यालोचनपरिपन्थिवितथैकमत्यबद्धादरतया स्वाचार्यपरम्परासमधिगतार्थापातप्रतीतिविरोधभ्रमशङ्कया चादसीयदर्शनरहस्यार्थविविदिषाविमुखाः, कतिपये श्रीवैष्णवाश्च दाक्षिणात्याः; तेऽपि च यदि श्रीवैष्णवधर्मसमयसञ्चरणैकफलतया द्वापरावसाने कृतावतरणैर्हंसयोगिप्रभृतीनामपि पूर्वतनैः श्रीभक्तिसारपरकालप्रभृतिभिश्च दिव्यसूरिभिः स्वीयदिव्यप्रबन्धेषु सुस्पष्टं संप्रतिपादितं रहस्यार्थविशेषतत्त्वं शुद्धधर्मसमयसिद्धान्तानुसृतं च विजानीरन्, तदा वृथैकमत्यबद्धादरसमुपजातापातप्रतीतार्थभ्रमविभ्रमशङ्काकलङ्कशल्यं हि समूलमुन्मूल्य, शुद्धसमयाचार्यसंप्रतिपन्नसिद्धान्तसंप्रदायश्च तद्दिव्यसूरिसमभिप्रेतोऽनादिसिद्धः प्रामाणिक इति च संमन्वीरन्, इति सुदृढं शक्यते विज्ञातुम् । तत्र परकालाख्यदिव्यसूरिप्रणीते 'திருமொழி' (*Tirumoḷi*) इति विख्याते च दिव्यप्रबन्धे प्रथमशतके हि सकलमनुजसमुपास्यवस्तुस्वरूपतदधिष्ठानसामान्यविशेषतदधिष्ठानप्राशस्त्यादिप्रतिपादिकाभिः (1)"வாடினேன் வாடி வருந்தினேன்" "वाडिनेन्वाडि वरुन्दि-

(1)The first stanzas in the first four *Pattu Pattus* (Ten verses) in *Mutharpattu* (first hundred verses) of *Peria Tirumoli.*

வாடினேன்வாடி வருந்தினேன் மனத்தால்
பெருந்துயரிடும்பையில் பிறந்து
கூடினேன்கூடி யிளையவர் தம்மோடவர்
தரும் கலவியே கருதி

नेन्" इत्यादिकाभिश्चत्वारिंशता गाथाभिः, 'तत्तत्कालचङ्क्रमण-
सङ्कुचितलोकसनातनधर्मसंस्थापनायैव हि साक्षाद्भगवान्परमात्मा

---

ஓடினேனோடி யுய்வதோர் பொருளாலுணர்வெனும்
பெரும்பதந் தெரிந்து
நாடினேன்நாடி நான் கண்டுகொண்டேன்
நாராயணாவென்னும் நாமம்.

வாலிமா வலத்தொரு வனுடல்கெட
வரிசிலை வளைவித்தன்று
ஏலநாறு தண்டடம் பொழிலிடம் பெற
விருந்த நலிமயத்துள்
ஆலிமாமுகிலதிர் தரவருவரைய
கடுறமுகடேறி
பீலிமாமயில் நடஞ்செயும் தடஞ்சுனைப்
பிரதிசென்றடை நெஞ்சே.

முற்றமூத்துக்கோல் துணையா முன்னடி
நோக்கி வளைந்து
இற்றகால்போல் தள்ளி மெள்ள
விருந்தங் கிளையாமுன்
பெற்றதாய் போல்வந்த பேய்ச்சி
பெருமுலையூடு உயிரை
வற்றவாங்கி யுண்டவாயான்
வதரி வணங்குதுமே.

எனமுனாகி இருநிலமிடந் தன்றிணையடி
யிமையவர் வணங்க
தானவனாகம்தரணியிற் புரளத்தடஞ்சிலை
குனித்த வென்தலைவன்
தேனமர்சோலைக் கற்பகம்பயந்த தெய்வ
நன்னறு மலர்கொணர்ந்து
வானவர் வணங்கும் கங்கையின் கரைமேல்
வதரியாச் சிராமத்துள்ளானே.

चावनिमण्डलमवतीर्य, योगब्रह्मविद्योपदेशपरमाधिष्ठानकाष्ठां समधिरूढे च बदरिकाश्रमे स्वाश्रितानां महात्मनां च शिष्याणां हि स्वधर्मानुष्ठापनोपदेशेनानुग्रहाय नरनारायणस्वरूपेण समुपतिष्ठते' इत्याद्यर्थविशेषसमुपपादिकया, दशमशतकषष्ठदशकप्रथमया (2) "எங்கானுமீதொப்பதோர் மாயமுண்டே" "एङ्गानुमीतोप्पदोर्मायमुण्डे" इत्यादिगाथया च, तथा श्रीभक्तिसारसूरिभिरपि प्रणीते स्वकीये "திருச்சந்தவிருத்தம்" "*Tiruccanda-viruttam*" इति विश्रुते च दिव्यप्रबन्धे हि "स्वनियतानुष्ठेयसंसारव्यवसायसमाप्तिपूर्वकपरप्राप्त्युपायभूतं च शुद्धयोगं समुपदिशन्! भगवन् नारायण." इत्याद्यर्थिकया (3) "தூய்மை யோகமாயினை" "तूय्मयोगमायिनाय्" इत्यादिकया चतु-

(2)The first stanza in the sixth *Pattu Pattus* (ten verses) in *Pattavatu Pattu* (tenth hundred verses) of *Peria, Tirumoli.*

எங்கானுமீ தொப்பதோர் மாயமுண்டே
நரநாரணனா யுலகத்தறநூல்
சிங்காமை விரித்தவ னெம்பெருமான்
அதுவன்றியும் செஞ்சுடரும் நிலனும்
பொங்கார் கடலும் பொருப்பும் நெருப்பும்
நெருக்கிப் புகப் பொன்மிடறத்தனைபோது
அங்காந்தவன் காண்மினின் றாய்ச்சியரால்
அளைவெண்ணெ யுண்டாப்புண்டிருந்தவனே.

(3)The fourteenth verse in *Tiruccandaviruttam.*

தூய்மை யோகமாயினாய்! தழா யலங்கல் மாலையாய்!
ஆமையாகி யாழ்கடல் துயின்றவாதி தேவ! நின்
நாமதேய மின்னதென்ன வல்லமல்லவாகிலும்
சாமவேத நீதனாய சக்ரபாணியல்லையே,

देश्या गाथया च भगवद्धंसयोगिसमभिवर्णितशुद्धधर्मसमयसंप्रदायश्च तैश्चापि सूरिभिः समभिप्रेत इति सम्यगेव विज्ञायते। तस्माच्छुद्धधर्मदर्शनं च श्रीभक्तिसारपरकालादिदिव्यसूर्युपज्ञं प्रवृत्तं कालगत्या हि क्वचित्क्वचित्समुपलब्धं नरनारायणभगवद्भ्यामेव महामहिममहर्षिसत्तमसमाम्नातं नारदकुमारटङ्काद्याचार्यविरचितशुद्धधर्मसंप्रदायसिद्धार्थबोधकदिव्यसूक्तिसमुपचितं हंसयोगिसमुद्धृतं भवतीति प्रमाणैकशरणैः पण्डितैश्च निष्पक्षपातं हि समभ्युपगन्तव्यं भवति।

---

## उपोद्घातनिगमनम्

भगवद्धंसयोगिभिः पुनरुपोद्घातप्रबन्धे च स्वकीये प्राचीनहंससप्तकसमुपपादितश्रीभगवद्गीतार्थाभिप्रायविशेषाणां विस्तरतः प्रतिपादनात् शुद्धधर्मदर्शनसिद्धगीतार्थबुभुत्सुजनसुखप्रतिपत्तये हि तदर्थाभिप्रायविशेषश्च संगृह्य, तादृशगीताया गायत्रीलक्षणयोगब्रह्मविद्यास्वरूपत्वप्रकारवैलक्षण्येन सह समभिवर्ण्यते। तथाहि— "ओङ्कारमुद्गिरन् वक्त्रात्सावित्रीं च तदन्वयाम्" इति महाभारतशान्तिपर्वणि भगवान् महर्षिभ्यः प्रथमं गायत्र्याः पूर्वं प्रणवं समुपदिश्य, पश्चाच्च प्रणवार्थसंबद्धां सावित्रीं च समुपादिशत्। तत्र च प्रणवार्थसंवलिता तत्त्वविद्यैव 'गायत्री' इति, 'सावित्री, इति, योगब्रह्मविद्या' इति च समभिधीयते। एवञ्चेयमपि श्रीभगवद्गीता तादृशयोगब्रह्मविद्यास्वरूपैव भवति। श्रीभगवद्गीतायाः "सर्वधर्मान्परित्यज्य" इति चरमश्लोकस्य गायत्रीस्वरूपतया त-

त्पूर्वतनस्य "अशोच्यानन्वशोचस्त्वम्" इत्यादेः "तमेव शरणं गच्छ" इत्यन्तस्य च भागस्य तद्व्याख्यानरूपस्य प्रणवार्थकत्वं चावगम्यते। यथा वा हि प्रणवे च व्यष्टिभावेन पुनस्त्रित्वम्, प्राकृतात्मीयभावाभिबद्धत्वरूपं प्रवृत्तिनिवृत्तिलक्षणं च पारतन्त्र्यं, दक्षिणोत्तरगतिद्वयपरः प्रवृत्तिपरो व्यवसायः, क्षेत्रज्ञोपक्रमरूपं चापरं तत्त्वम्; समष्ट्या च तस्मिन्नोङ्कारे पुनरेकत्वम्, शुद्धब्रह्मस्वभावाभिबद्धत्वरूपं परप्राप्त्युपायभूतं च स्वातन्त्र्यम्, परायणरूपशुद्धगतिको निवृत्तिपरो व्यवसायः, क्षेत्रज्ञोपसंहाररूपं च परं तत्त्वमवगम्यते। तथैव गीतायाः पूर्वषट्कत्रये व्यष्टिप्रणवार्थात्मके त्रित्वपारतन्त्र्यप्रवृत्तिव्यवसायापरतत्त्वानि, तुर्यषट्के च समष्टिप्रणवार्थात्मके चैकत्वस्वातन्त्र्यनिवृत्तिव्यवसायपरतत्त्वानि समुपलभ्यन्ते। अत एव च पूर्वषट्कत्रयस्य सांख्यकाण्डत्वेन, तुर्यषट्कस्य योगकाण्डत्वेन च व्यवहारः शुद्धसमयाचार्यैः सिद्धान्तित इति विज्ञायते। तथा च सांख्ययोगकाण्डद्वयात्मकतादृशयोगब्रह्मविद्यास्वरूपायाश्च गीतायाः पूर्वषट्कत्रयसमधिगम्यगुणकर्मचिह्नितप्राकृतानात्मभावसिद्धप्रवृत्तिपरव्यवसायिभिः ज्ञानिभिर्भक्तैः कर्मठैश्च तथा केवलगुणचिह्नितदात्मभावसिद्धनिवृत्तिपरव्यवसायिभिश्चाधिकारिभिः प्राकृतात्मस्वरूपदृष्ट्या स्वनियतानुष्ठेयं यद्यत्कर्म समाचर्यते, तत्सर्वं च स्वस्वरूपजं भवति। शुद्धात्मस्वभावदृष्ट्या क्रियमाणे च शुद्धसांख्यव्यवसाये तदधिकारिणां स्वस्वरूपजत्वबुद्धिनिवृत्तिरिति, तथा तुरीयषट्कसमधिगम्यशुद्धयोगव्यवसायिभिः

शुद्धात्मदृष्ट्या क्रियमाणं सर्वमपि स्वभावजमेव, इति च विज्ञायते। इतः परं दुरवगाहशुद्धदर्शनसागरमध्यपरिवलिततत्त्वरत्नसंजिघृक्षु-जनसुग्रहार्थं कतिपयकारिकाभिः श्रीभगवद्गीताध्यायविषयानुक्रमणिका चेत्थं संगृह्यते—

अस्माभिरद्य सारार्थो गीतायाश्चाभिधीयते।
अध्याये प्रथमे राज्ञः सर्वशास्त्रार्थवेदिनः॥
शुद्धविद्याविविदिषापरिप्रश्नपुरस्सरम्।
गीतावतरणेनैव समभिव्यञ्जिता समम्॥
नरनारायणोत्तंसधर्मगीता द्वितीयके।
तथावतारगीता च प्रोक्ताध्याये तृतीयके॥
तुर्येऽधिकारगीता च शिक्षागीता च पञ्चमे।
षष्ठे कारणगीताथ सप्तमे च निरूपिता॥
कैवल्यगीता विज्ञानव्यवसायफलात्मिका।
चतुःषट्कसमेतायां गीतायां च चतुर्षु च॥
पादेषु चादिमे ज्ञानपादे षट्के तथादिमे।
एवं महत्तत्त्वकूटं विज्ञानव्यवसायगम्॥
एतावता संविभज्य सप्रपञ्चं निरूपितम्।
स्वरूपगीताष्टमिके प्रोक्ता नावमिके पुनः॥
साधनत्रयगीतास्मिन्नध्याये च प्रकीर्तिता।
मायागीता च दशमे वर्णितैकादशे पुनः॥
अध्याये मोक्षगीता च संप्रोक्ता द्वादशे तथा।
ब्रह्मस्वरूपगीता च वर्णिताथ त्रयोदशे॥

गीता ब्रह्मविभूत्याख्या भक्तप्राप्या प्रकीर्तिता ।
सङ्कल्पव्यवसायस्य फलरूपा सुविस्तरम् ॥
एवं मनस्तत्त्वकूटं संविभज्य द्वितीयके ।
षट्के सङ्कल्पपादे च मानसव्यवसायगम् ॥
प्रपञ्चितं भगवता शुद्धदर्शनरीतितः ।
प्रोक्ता प्राणायामगीता तथाध्याये चतुर्दशे ॥
अध्याये परमात्माख्या गीता पञ्चदशे तथा ।
अध्यायेऽक्षरगीता च षोडशेऽस्मिन्निरूपिता ॥
प्रपञ्चिता राजविद्यागीता सप्तदशे तथा ।
अष्टादशे तु परमहंसगीताभिवर्णिता ॥
एकोनविंशे संन्यासगीताध्याये फलात्मिका ।
सा कर्मव्यवसायस्य कर्मपादे तृतीयके ॥
षट्के चेन्द्रियतत्त्वाख्यकूटं तद्व्यवसायगम् ।
विभज्य विस्तरेणात्र वर्णिता शुद्धयोगिभिः ॥
विंशेऽध्याये चात्मगीता कथिता चैकविंशके ।
तथा प्रकृतिगीताथ कर्मगीताभिवर्णिता ॥
द्वाविंशे भक्तिगीता तु त्रयोविंशे निरूपिता ।
चतुर्विंशे ज्ञानगीता पञ्चविंशे तुरीयके ॥
योगपादे तुर्यषट्के योगगीताभिवर्णिता ।
सा योगव्यवसायस्य ब्रह्मसमीप्यलक्षणा ॥

फलभूता तुरीयेऽस्मिन्व्यवसाये विविच्य हि ।
अव्यक्ततत्त्वकूटं च सविमर्शं निरूपितम् ॥
षड्विंशे परमं तत्त्वं परमः पुरुषस्तु सः ।
मत्यानुरूपं स्वं धर्मं परमाचार्यशिष्ययोः ॥
धर्मेण चोपदिश्यैवं महत्त्वं प्रणिपित्सवे ।
शिष्याय च नरांशाय श्रद्दधानाय जिष्णवे ॥
नारायणो वासुदेवो धर्मशास्ता यथायुगम् ।
आत्मस्वरूपानुरूपं स्वधर्मं समतिष्ठिपत् ॥

इति । इतोऽपि निरतिशयवैलक्षण्यं विस्तरशः श्रीभगवद्गीताभाष्यद्वितीयभागेऽस्मदुपोद्घाते समुपपादयिष्यते । तस्मादास्माकमेतं श्रीभगवद्गीताभाष्यार्थसन्ततचिन्तनसन्तन्यमानश्रीभगवन्नारायणानुग्रहसमुदितवचनगुम्भमुपोद्घातं श्रीमन्नारायणदिव्यचरणारविन्दयुगलयोः समर्प्य चादसीयदिव्यप्रबन्धभाष्यप्रवक्तृप्रवाचयितृभ्यस्तथा - डाक्टर् - सर्-यस् - श्रीसुब्रह्मण्यार्यप्रभुवरेभ्यो ऽन्येभ्यश्च तादृशशुद्धधर्ममण्डलसत्कैङ्कर्यपर्यङ्कसमारूढेभ्यः सत्पुरुषेभ्यः श्रियःपतिः परंब्रह्म सर्वलोकेश्वरो नारायणः सकलाभिलषितं सुखं संप्रयच्छत्विति भगवन्तं श्रीमन्नारायणं सविनयं समभ्यर्थयामः ॥

इति सतां विधेयः

दी. श्री. शठकोपाचार्यः

D. S. SATAKOPACHARIYAR,
Senior Pandit
*Govt. Oriental Mss. Library, Museum, Madras*



ओं नमः श्रीपरमर्षिभ्यो योगिभ्यः

# श्रीहंसयोगिविरचितः

## पञ्चदशः

## महाभारतोपोद्घातः ।

नमस्ते नरदेवाय नमो नारायणाय च ।
बदरीवननाथाय योगिनां पतये नमः ॥

अथातस्तामिमां भारतसंहितां व्याख्यास्यामः । ओं श्रियः पतिः परब्रह्मनारायणः साकं हि स्वस्वरूपानुरूपैश्चाधिकारिभिः स्वोपकल्पितसर्वधर्मसेतुसंरक्षणैकधुरंधरो नित्यशुद्धसत्यसङ्कल्पः सर्वेश्वरश्च—

"ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृत् ।
ऋषिरूपधरः कर्म योगं योगेशरूपधृत् ॥"

इत्याद्युक्तेः, प्रतियुगं स्वनियतानुष्ठेयव्यवसायसमाप्तिपूर्वकपरप्राप्तिप्रकारजिज्ञासूनां साधूनां तदनुष्ठेयधर्माणां च सति महति वैकल्ये, तस्मात्तत्साधूनां तदनुष्ठेयधर्माणां च परित्राणस्य तत्तत्कालजनस्वभावानुरूपस्वेच्छापरिगृहीतस्वदिव्यमङ्गळविग्रहायत्ततया, यथा

या हि सर्वे लोकाः प्रणवावयवभूतैर्वर्णैस्त्रिभिश्च तत्त्वत्रयबोधकैः संजातेन मुमुक्षुपरप्रेप्स्वधिकारिभोग्येन च तदात्मानात्मब्रह्मतत्त्वविज्ञानेन समुज्जीवेयुः, तथा तदुच्छितानि सर्वाणि धर्मशास्त्राणि संप्रसाद्य संरिरक्षिषुः—

"प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः ।
धर्मसंरक्षणार्थाय सत्यवत्यां पराशरात् ॥
द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
कृष्णद्वैपायनो व्यासो महात्मा योगलक्षणः ॥
सोऽयं नारायणांशश्च सर्वलक्षणसंयुतः ।
येन लोकाश्च सर्वेऽपि पश्यन्ति परमं पदम् ॥" इति

"पितामहाद्यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशजमेकधर्मं
द्वैपायनं वेदमहानिधानम् ॥"

इत्याद्युक्तेः, द्वापरे युगे दिव्यशक्तिमत्यां सत्यवत्यां तादृशात्पराशराच्च महर्षेः स्वसिद्धांशेन पुत्रश्चावततार, इति विज्ञायते। एवंविधमाहात्म्येन भगवन्नारायणांशेन समवतीर्णो भगवान्पराशरसुतः—

"कृतोपनयनो व्यासो याज्ञवल्क्येन धीमता ।
वेदानधिजगौ साङ्गानोङ्कारेण त्रिमात्रया ॥"

इति, ब्रह्मविद्धुरीणेन शुद्धवेदाचार्येण ब्रह्मर्षिणा च याज्ञवल्क्येन 'व्यासः' इति कृतनामसंस्कारो ब्रह्मण्यधिकृतश्च, सर्वदर्शनमूल-

भूतसनातनशुद्धब्रह्मप्रतिमाभूताकारोकारमकारात्मकप्रणवदर्शना-ध्ययनपूर्वकं साङ्गांश्च सर्वान्वेदान्समन्वयेन पुनरधीते स्म। एवमधी-तसाङ्गसशिरस्कवेदश्च युक्तात्मा भगवान्व्यासः स्वीकृतलोकधर्मसं-रक्षणाधिकारश्च महात्मा सन् स्वाधिकारस्वरूपानुरूपं च कर्म चि-कीर्षुः सर्वलोकेश्वरभगवन्नारायणांशस्वात्मस्वरूपध्यानपरश्च, तथा—

"ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे ।
पादापसारिणं धर्मं विद्वान्स तु युगे युगे ॥

आयुश्शक्ती च मर्त्यानां युगावस्थामवेक्ष्य च ।
ब्रह्मर्षिब्राह्मणानां च तथानुग्रहकाम्यया ॥"

इति, तत्तत्कालानुगुणभगवदवतारकार्यधर्मस्वभावाभिज्ञेन ब्रह्मदे-वेन प्रचोदितश्च दयानिधिः, यथायुगं हि संप्रवृत्ताखिलधर्मस्व-भावमायुः शक्तिं च जनानां विज्ञाय, लोकानुग्रहार्थं यथावर्णा-श्रमस्वभावं धर्मवचनांश्च सर्वान्वेदान्विभजते स्म । अत एव तस्य भगवतः "विव्यास वेदान्यस्माच्च वेदव्यास इति स्मृतः" इति वेदव्यास इति च दिव्यं च नाम संबभूव । ततश्चैवंभूतश्च स भगवान् सर्वस्यापि धर्मस्य तत्साध्यपुरुषार्थस्य च वेदेषु बहुधा विशीर्णत्वं तावता तत्सर्वविज्ञानस्यातिक्लेशसाध्यत्वं च विज्ञाय, सर्वधर्मसंग्राहकं प्रबन्धमेकं महार्थं च स्वतपोबलेन चिकीर्षुः—

"पुण्ये हिमवतः पादे मेध्ये गिरिगुहालये ।
विशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः ॥

शुचिः सनियमो व्यासः शान्तात्मा तपसि स्थितः ।
प्रविश्य योगं ज्ञानेन सोऽपश्यत्सर्वमन्ततः ॥
भूतस्थानानि सर्वाणि रहस्यं त्रिविधं च यत् ।
वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ॥
धर्मार्थकामयुक्तानि शास्त्राणि विविधानि च ।
लोकयात्राविधानं च सर्वं तद् दृष्टवानृषिः ॥"

इत्याद्युक्तेः, महापुण्यं शुद्धं हिमालयप्रदेशस्थं च बदरीवनमासाद्य, शुद्धार्यानुग्रहेण भगवद्वासुदेवमूर्त्यधिष्ठितां च महागुहां समधिष्ठाय, तद्भगवद्वासुदेवदीक्षितश्च शुद्धधर्ममण्डलार्यगोष्ठीमनुप्रविष्टो हि स्वशुद्धयोगसमुन्मीलितदिव्यज्ञानलोचनेन महाभारतसूत्राणि च चतुर्विंशतिसंख्याकानि तथा तेषां च सूत्राणां व्याख्यात्रीं चतुर्विंशतिसाहस्रीं भार्गवव्यासोपदिष्टां पुराणीं च भारतसंहितां यथावच्च सारस्वतादिभ्योऽधिकारिभ्यः समुपलभ्य—

"चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ॥
इदं शतसहस्रं तु श्लोकानां पुण्यकर्मणाम् ।
उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥
अलंकृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः ।
त्रिभिर्वर्षैर्महत्पुण्यं कृष्णद्वैपायनो मुनिः ॥
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् ।
अखिलं भारतं चेदं चकार भगवानृषिः ॥"

इत्याद्युक्तेश्च, प्रथमं हि चतुर्विंशतिसाहस्त्रीं मूलभूतां विबुधादिसंरक्षितां च भारतसंहितां यथाक्रममनुबध्नन्, तामिमां लक्षणपरां भारतसंहितां सर्वस्वभावस्वरूपब्रह्मविज्ञानजनकार्थबोधकशब्दस्वरूपाभिमण्डितां सर्वसिद्धान्तनिरूपणपरां च भावाभावनिष्ठाधिकारिपुरुषश्राव्यैर्लक्ष्यभूतैश्च पुण्यपुरुषोपाख्यानैः सह लक्षग्रन्थात्मिकां हि वर्षत्रयेण चकार, इति विज्ञायते। ततश्च सोऽयं भगवांश्च व्यासः—

"इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम् ।
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ प्रभुः ॥
पित्र्ये पञ्चदश प्रोक्तं रक्षोयक्षे चतुर्दश ।
एकं शतसहस्रं च मानुषेषु प्रतिष्ठितम् ॥"

इत्युक्तेः, यथाकालं यथालोकं यथाधिकारं च तन्नियतसंख्यया भारताख्यानमिदं स्वशिष्येभ्यो महात्मभ्यः समुपादिशत । अथ तच्छिष्येषु शुद्धयोगावलम्बिषु—

"ततश्च श्रावयामास धर्मात्मा देवलः पितॄन् ।
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥
वैशम्पायनविप्रर्षिः श्रावयामास पार्थिवम् ।
पारीक्षितं महात्मानं नाम्ना तु जनमेजयम् ॥
अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् ।
शिष्यो व्यासस्य धर्मात्मा सर्ववेदविदां वरः ॥
इदं च भारताख्यानमादौ च ब्रह्मसंमितम् ।
त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम् ॥

लक्ष्यलक्षणसंयुक्तं सर्वधर्मसुशोभितम् ।
इदं प्रियंवदश्चैव नारदोऽध्यापयत्सुरान् ॥ ”

इत्याद्युक्तेः, तदिदं भारताख्यानं पुनः देवलश्च पञ्चदशसहस्र-ग्रन्थात्मकं च तत्पितृभ्यो व्याजहार, शुकश्च भगवान्वैयासकिः यक्षरक्षोभ्यश्च चतुर्दशसहस्रग्रन्थात्मकं तच्च समुपादिशत्, वैशम्पायनश्च व्यासशिष्यो लक्षग्रन्थात्मकं तच्च जनमेजयाय राज्ञे समुपदिशन्मानुषमण्डले च सञ्चारयामास, इति विज्ञायते तदिदं भारताख्यानं लक्षत्रयग्रन्थात्मकं च पुरा देवादिषूर्ध्वलोकेषु प्रियंवदाख्येन नारदेन च प्रख्यापितमिति च विज्ञायते । लक्ष्यलक्षणात्मके कृष्णद्वैपायनकृते चास्मिन्भारते—

इदं च त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।
विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥
भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् ।
दुर्वृत्तं धार्तराष्ट्राणां चकार भगवानृषिः ॥”

इति, भगवता वैशम्पायनेन प्रतिपाद्यं हि वस्तुस्वरूपं प्रयोजनं चाभिवर्णितम् । एवं भगवता कृष्णद्वैपायनेन च स्वप्रकाशितलक्ष्यलक्षणात्मकमहाभारतप्रबन्धसंग्रहविषयानुक्रमणिका चेत्थम्—

“ अथोवाच महातेजा ब्रह्माणं परमेष्ठिनम् ।
कृतं मयेदं भगवन्काव्यं परमपूजितम् ॥

ब्रह्मन्वेदरहस्यं च यच्चान्यत्स्थापितं मया ।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥
इतिहासपुराणानामुन्मेषं निमिषं च यत् ।
भूतं भव्यं भविष्यच्च त्रिविधं कालसंज्ञितम् ॥
जरामृत्युभयव्याधिभावाभावविनिश्चयः ।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ॥
चातुर्वर्ण्यविधानं च पुराणानां च कृत्स्नशः ।
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ॥
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ॥
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा ।
इति नैकाश्रयं जन्म दिव्यमानुषसंज्ञितम् ॥
तीर्थानां चैव पुण्यानां देशानां चैव कीर्त्तनम् ।
नदीनां पर्वतानां च वनानां सागरस्य च ॥
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।
वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥
सर्वदर्शनसंवेद्यं सर्वभावं सनातनम् ।
यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम् ॥''

इति प्रतिपादिता भवति । अनेन च समस्तवेदगुप्तरहस्यार्थः, साङ्गानां च सर्वेषां वेदानां तथेतिहासपुराणादीनां च यथाकालं यथालोकं च सङ्कोचविकासः, कालत्रयानुगतलोकस्वभावः, प्रा-

कृतदोषसत्त्वासत्त्वनिश्चयः, शुद्धाशुद्धधर्मस्य तदधिकारिणां च स्वरूपम्, मानुषाणां च सर्वेषां स्वभावस्वरूपप्रयुक्तस्य च धर्मस्य स्वरूपम्, परप्रेप्सुमुमुक्षुधर्मस्वरूपम्, युगादिकालक्रमावबद्धभूगोळचन्द्रसूर्यादिग्रहस्वरूपम्, सर्वस्वभावोपेतब्रह्मस्वरूपम्, इत्यादि मनुजवेद्यं सर्वमपि महाभारतादवधेयं भवतीति विज्ञायते । तथा च क्षेत्रक्षेत्रज्ञयोगजसंसारव्यवसायानुगताश्च सर्वे धर्माः प्रबन्धेऽस्मिंश्च महाभारताख्ये सर्वमनुजसेव्यत्वेन विहिताः सन्ति, इति विज्ञायते । किं च तदिदं भारताख्यानं हि—

"विचित्रार्थपदाख्यानमनेकसमयान्वितम् ।
प्रतिपन्नं नरैः प्राज्ञैः वैराग्यमिव मोक्षिभिः ॥
आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् ।
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ॥
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणा ॥"

इत्याद्युक्तेः, साधनेषु वैराग्यमिव, उपास्यब्रह्मस्वरूपेष्वात्मेव, सर्वेषामनुकूलतया वेदनीयेषु भावेषु जीवितमिव, सर्वदर्शनानां च जीवभूतार्थबोधकत्वान्मुख्यं भवति । न विना चान्नं हि देहधारणमिव पुण्याः कथाश्च नैतद्विना परिदृश्यन्ते । अत एव हि भगवता ब्रह्मदेवेन महाभारतप्रशंसा चेत्थम्—

"तपोविशिष्टादपि वै वसिष्ठान्मुनिपुङ्गवात् ।
मन्ये श्रेष्ठतमं त्वां वै रहस्यज्ञानवेदनात् ॥

जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।
त्वया च काव्यमित्युक्तं तस्मात्काव्यं भवत्विति ॥
अस्य काव्यस्य कवयो न समर्था विशेषणे ।
विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥
जडान्धबधिरोन्मत्तं तमोभूतं जगद्भवेत् ।
यदि ज्ञानहुताशेन त्वया नोज्ज्वलितं भवेत् ॥
तमसान्धस्य लोकस्य वेष्टितस्य स्वकर्मभिः ।
ज्ञानाञ्जनशलाकाभिर्बुद्धिनेत्रोत्सवः कृतः ॥
धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
त्वया भारतसूर्येण नृणां विनिहतं तमः ॥
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाप्रकाशिना ।
नृणां कुमुदसौम्यानां कृतं बुद्धिप्रकाशनम् ॥
इतिहासप्रदीपेन मोहावरणघातिना ।
लोकगर्भगृहं कृत्स्नं यथावत्संप्रकाशितम् ॥"

इत्यभिवर्णिता भवतीति विज्ञायते। ततश्च सेयं ब्रह्मवादिनी भारतसंहिता च स्वाध्येतॄणां च मानवानां सर्वदर्शनानां संक्षिप्तं विस्तृतं च रहस्यार्थस्य व्याख्यानेन तदात्मानात्मविवेकप्रतिबन्धकभूताज्ञाननिरसनपूर्वकं हि दिव्यं च ज्ञानं सञ्जनयति, इति सिद्धान्तः। अत एव च भगवान्सत्यलोकाधिकारी च नारदः प्रियंवदाभिधानश्च सन्, लोकानुग्रहार्थं व्यासशिष्यतां च समधिगम्य, सत्यादिषु च शुद्धलोकेषु तामिमां भारतसंहितां लक्षत्रयग्रन्थात्मकत्वे-

न समभिवर्ध्य सर्वांश्च देवानाश्रावयत्, इति आचार्यगोभिलवचनं च साधु सङ्गच्छते, इति शुद्धार्यसिद्धान्तः। अथ च भगवान्व्यासः स्वकृतभारतस्येतिहासस्य सर्ववेदरहस्यार्थबोधकत्वेन सत्यपि महत्त्वे, सर्वस्मादपि शास्त्रादधिकमहत्त्वसंपादनार्थम्, स्वोक्तानां सर्वलोकस्वभावसहजभोग्यानां च सर्वेषां धर्माणां शुद्धसङ्कल्पनायकभगवन्नारायणशुद्धधर्मानुशासननिरूपणेन प्रमाणसंपादनार्थं च, चतुर्विंशतिगीतात्मिकां भगवन्नारायणांशभूतेन श्रीकृष्णेन स्वांशभूताय नरायार्जुनायोपदिष्टां शुद्धयोगब्रह्मविद्यां च भगवद्गीताभिधां ग्रथ्नाति स्म हि मध्येमहाभारतम्। एवं भगवन्नारायणांशश्रीवासुदेववदनकमलगळितमुमुक्षुभोग्यगीतामृतगर्भत्वेनैवास्य दिव्यप्रबन्धस्य—

"भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा॥
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम्।
आरण्यकञ्च वेदस्य ओषधिभ्योऽमृतं यथा॥"

इति, ब्रह्मविद्यारहस्यार्थतत्त्वबोधनसामर्थ्यम्,—

"एकतश्चतुरो वेदान्भारतं चैकतः स्थितम्।
पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम्॥
चतुर्भ्यस्सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा।
तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते॥

महत्त्वेन गुरुत्वेन ध्रियमाणं यतोऽधिकम्।

महत्त्वद्भारवत्त्वाच्च महाभारतमुच्यते ॥"

इति महाभारतनामवाच्यत्वम्, सर्वसाङ्गोपवेदवेदाधिकमहत्त्वञ्च सुसङ्गच्छते। अन्यथा हि न केवलमस्य सर्ववेदाधिकमहत्त्वमधिगन्तुं शक्यते। अत एवास्य महाभारतस्य "भारतः पञ्चमो वेदः" इति श्रुत्या पञ्चमवेदत्वमभ्युपगतं भवति। पञ्चमवेदत्वं नामास्य चतुर्विधपुरुषार्थातीतब्रह्मसामीप्यादिप्राप्तिरूपपञ्चमपुरुषार्थप्रतिपादकत्वमेवेति कुमारो ह्याचार्यो वदति। भरद्वाजस्त्वाचार्यः- पञ्चमेन सर्वेश्वरेण नारायणेन प्रतिपादितः वेदः चतुर्वंशतिगीतात्मकभगवद्गीतारूपः, तद्विशिष्टत्वेन महाभारतोऽपि पञ्चमो वेद इति विज्ञेयम्। सर्वेश्वरस्य नारायणस्य पञ्चमत्वे हि प्रमाणम् "मृत्युर्धावति पञ्चमः" इति श्रुतिर्भवति। भगवानति गीतायाम् "दैवञ्चैवात्र पञ्चमम्" इति वदतीत्याह। अतश्च सर्वेश्वरभगवन्नारायणोक्तगीतागर्भत्वेनास्य महाभारतस्य सर्वतः श्रैष्ठ्यं सुप्रसिद्धमेव। अथ चैवं भगवतो व्यासस्य लक्षग्रन्थात्मिकां भारतसंहिताम्—

"जनमेजयेन पृष्टः सन्ब्राह्मणैश्च सहस्रशः।

शशास शिष्यमासीनं वैशम्पायनमन्तिके।

स सदस्यैः सहासीनः श्रावयामास भारतम् ॥"

इति, यज्ञशालायां जनमेजयराजपृष्टेन स्वाचार्येणादिष्टः सर्वानृ-

पीन्श्रावयामास सच्छिष्यो वैशम्पायनः। तदेवंभूतस्यास्य महा-भारतस्य विषयप्रयोजनादिकमेवमभिवर्णयत्याचार्यो गोभिलः—

"शृणुध्वं मुनयः सर्वे शम्बलग्रामवासिनः ।
भारतस्येतिहासस्य चानुबन्धिचतुष्टयम् ॥
एतद्धि द्विविधं भाति वस्त्वधिकारिभेदतः ।
वस्तु ब्रह्मेति विन्दन्तु तच्च हि त्रिविधं स्मृतम् ॥
विषयः प्रयोजनञ्च संबन्धश्चेति बुध्यते ।
विषयो हीप्सितश्च स्यात्संबन्धः साधनं स्मृतः ॥
विषयस्साधनञ्चैव येनैक्यं व्रजति क्रमात् ।
विद्यात्प्रयोजनं तद्धि ब्रह्मविज्ञानमेव तत् ॥
अतो वस्तुनि योगीन्द्राः त्रैविध्यञ्चैवमुच्यते ।
गायत्र्याः प्रथमे पादे त्वीप्सितं परिदृश्यते ॥
द्वितीये च साधनं स्यात्तृतीये चरणे बुधाः ।
ब्रह्मविज्ञानमेवास्ति सर्वसंहारहेतु च ॥
चतुर्थे चरणे त्वेवं ब्रह्म चैकं हि बुध्यते ।
षोढा त्रयाणां विज्ञाने त्वष्टादशपदार्थधीः ॥
सत्त्वं रजस्तम इति गुणाः साधनसंभवाः ।
साधनं स्याद्धि संसारस्तस्य स्युस्त्रिविधा गुणाः ॥
ऊर्ध्वाधःसृष्टियोगेन धर्मेण हि महर्षयः ।
निवृत्तिप्रवृतिनाम्ना षड्विधास्ते ह्युदाहृताः ॥

गुणास्तथा विषयजास्त्रयः प्रोक्ताश्च शोभनाः ।
तात्त्विको रासिकश्चैव चैतनश्चेति तान्विदुः ॥

निवृत्तिप्रवृत्तिनाम्ना हि धर्मेण परमर्षयः ।
षड्विधास्ते प्रकीर्त्यन्ते ते प्रयोजनसंभवाः ॥

शुद्धसत्त्वं शुद्धरजः तमः शुद्धञ्च तादृशम् ।
गुणाः संबन्धजा ह्येते पूर्ववद् द्विविधा मताः ॥

अतोऽष्टादशपर्वा स्याद्भारतः पञ्चमश्रुतिः ।
अनुबन्धिचतुष्टयवार्ता नैवात्र विद्यते ॥

अनुबन्धिद्वयञ्चैव भारते संप्रदृश्यते ।
प्रथमं वस्तु निर्दिष्टं त्रितयं परिबुध्यते ॥

द्वितीयोऽसौ च तद्विद्वानधिकारी रहस्यवित् ।
विषयः परमात्मा स्यात्तथात्मा जीवनामकः ॥

विषयादीनि वस्तूनि बुध्यन्ते प्रणवेन हि ।
ब्राह्मे पादे तुरीये च गायत्र्याः परमर्षयः ॥

तुरीयं परमं ब्रह्म सौरचक्रविभूतिमत् ।
सृष्टिः स्थितिस्संहृतिश्च गुणास्ते ब्रह्मणो विदुः ॥

तुरीयपादपद्धत्या भारताख्यानमुत्तमम् ।
चतुर्विंशतिपर्वास्ति वह्निलक्षप्रबन्धकः ॥

मूलभारतमाख्यानं चतुर्विंशतिविक्रमम् ।
प्रणवान्मन्त्रमाता स्यात्ततो विद्या यथाक्रमम् ॥

ततः सारमुपाख्यानं भारतं परमामृतम्।
चतुर्विंशतिसाहस्रग्रन्थसंख्याभिमण्डितम् ॥

त्रिपदा च मनोर्माता पञ्चदशसहस्रकैः ।
ग्रन्थैः पितृपुरे प्रोक्ता सैव कर्मावगाहिनी ॥

चतुर्दशप्रकारेण यक्षरक्षोगणेषु च ।
सहस्रेण समाख्याता शुकेन च महात्मना ।
लक्षग्रन्थेन मर्त्येषु विदितास्ति सनातनी ।
अतो ह्यस्मिन्भारतेऽस्ति जिज्ञासा ब्रह्मणः परा ॥

तज्ज्ञानिनश्च विप्रेन्द्राः ह्यधिकारपदाङ्किताः ।
विज्ञानात्पठनादस्य बुध्यते चोत्तमोत्तमम् ॥"

इति । एतत्तत्त्वादिकं सर्वं तत्तत्पर्वणि प्रथमं निरूपयिष्यामः। भारतं चेदं त्रिधा पठ्यमानं परिदृश्यते। तत्रैकं च गायत्रीमूलकं भवति, तदेव शतसहस्रात्मकम् । अपरञ्च आस्तिकेतिहासमूलकं चतुर्दशसहस्रात्मकं भवति। तृतीयञ्च उपरिचरवसुचरितादिमूलकम्। तदुक्तं भारते

"मन्वादिभारतं केचिदास्तिकादि तथापरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे ॥

इति। अत्रायं गोभिलाशयः—कस्मिंश्चिन्मन्वन्तरे व्यासस्थानमधिगतो भार्गवः भगवन्नारायणकृपावगतां चतुर्विंशतिसाहस्रीं भारतसंहितां संप्रकाशयति स्म। तदनन्तरं कृष्णद्वैपायनो मुनिश्च

व्यासस्थानमधितिष्ठन् स्वशुद्धयोगेन तां भारतसंहितां यथावच्च दृष्ट्वा सोदाहरणोपाख्यानेन लक्षग्रन्थात्मिकां चकार। तदा हि मूल-भारताभिवृद्धिमसहमानाः जम्बूकादयो ब्राह्मणा ह्यासुरभावमवलम्ब्य कृष्णद्वैपायनाश्रममासाद्य च तादृशीं भारतसंहितां गृहीत्वा दिक्षु प्राक्षिपन्। एवं दुर्दशामधिगतायां भारतसंहितायां वैशम्पायनादयो व्यासशिष्या महर्षयः तत्संहितान्वेषणपराः समभवन् । तदानीं भारतस्य स्वभावो भिन्नभिन्नक्रमः समजनि। अथ व्यासशिष्या यथोपलब्धक्रमं यथाश्लोकसंख्यञ्च भारतं स्वस्वशिष्येभ्यः समुपादिशन् । अथ कदाचिद्वैशम्पायनः सोदाहरणोपाख्यानभारत-प्रभावं विज्ञाय आचार्यानुगृहीतः जम्बूकादीन्ब्राह्मणानानीय तेभ्य-स्तादृशं तद्वैभवमुपदिश्य साकं तैः पुनः तदन्वेषणपरोऽभवत्। एवं गते च बहुतिथे तत्र तत्र क्रमशः ब्राह्मणैर्महर्षिभिश्च सुसंरक्षितां पठ्यमानां तालपत्रगतां भारतसंहिताञ्च ह्युपलभ्य यथा-बुद्धिविभक्तं क्रमेण ग्रथ्नाति स्म। क्रमे च तस्मिन्महर्षीणां पर-स्परं विवादः समभवत् । ततो भिन्नाभिप्रायाश्च महर्षयः यथा-स्वसिद्धान्तं भारतक्रममकल्पयन् । जम्बूकादिषु ब्राह्मणेषु केचि-द्यथामति तत्तत्क्रमोपलक्षितं भारतमगृह्णन् । ततःप्रभृति भारतप्रबन्धश्च भिन्नभिन्नक्रमः असंपूर्णश्च समभवत्। तत्र द्वित्राः क्रमाश्च द्वापरान्ते कलियुगप्रारम्भे चास्मिन्संप्रदृश्यन्ते । कदा-चिच्छुद्धधर्ममण्डलाचार्याः साकं भगवन्नारायणप्रमुखैरधिका-रिभिः स्वशुद्धज्ञानेन लक्षग्रन्थात्मकं गायत्रीमूलकञ्च भारतं

सम्यक्परिशोध्य यथाक्रमं समञ्जसं संपूर्णञ्च संग्रथ्नन्ति स्म इति। तच्चैवमुक्तं गोभिलकारिकायाम्

"बभूव भारतञ्चैकं पूर्वकल्पे महर्षयः ।
यथाकालं यथादेशमभिवृद्धिञ्च तस्य हि ॥
कृष्णद्वैपायनकृतां वीक्ष्य वै ब्राह्मणोत्तमाः ।
जम्बूकाद्याश्च संक्रुद्धाः दिक्षु तत्प्राक्षिपन्ततः ॥
विशीर्णमभवत्तच्च चिरं वै मुनिपुङ्गवाः ।
तदा तु यमिनां श्रेष्ठो व्यासशिष्यस्तु सत्वरम् ॥
सान्त्वयन्ब्राह्मणांस्तांश्च समानीय प्रयत्नतः ।
कृष्णद्वैपायनेनात्र विस्तीर्णां तत्त्ववित्तमः ॥
उपाख्यानैरनेकैश्च पुरुषाणां महात्मनाम् ।
लक्षग्रन्थात्मिकां दिव्यां संहितां भारताभिधाम् ॥
अध्यापयत्प्रयत्नेन ततस्ते ब्राह्मणोत्तमाः ।
बभूवुः संप्रहृष्टा हि ततः साकञ्च तैर्द्विजैः ॥
परिष्चकार ताञ्चापि वैशम्पायनपुण्यधीः ।
ततश्च भारतं दिव्यं त्रिधा भिन्नं जगत्तले ॥
तद्व्यत्यस्तक्रमञ्चैव न्यूनञ्च परिदृश्यते ।
तथाभूतञ्च तत्सर्वं द्विजाः सम्यगधीयिरे ॥
प्राप्ते चैवं दुर्दशां हि भारते लोकमण्डले ।
चतुर्दशसहस्रं वै कदाचित्समदृश्यत ॥

पञ्चदशसहस्त्रं च समभूच्च क्वचित्पुनः ।
लक्षग्रन्थः क्वचिच्चाऽपि ततोऽधिकतरः क्वचित् ॥
अत्रेत्थं तत्त्वमाहुस्ते प्रचीना हंसयोगिनः ।
शास्त्राणां दुर्दशा कालनियता चेति निर्णयः ॥
तस्यां सत्यां हि शास्त्राणां तत्तद्विद्याप्रवर्तकाः ।
तेपिरे स्वरयोगेन चण्डभानुतपः परम् ॥
अथ त्रिवितमाकाशफलके तु महर्षयः ।
कर्मणां त्रिविधानां च बोधकं पितृणां परम् ॥
यावद्ध्यपेक्षितं तावद्देवलश्च महानृषिः ।
पञ्चदशसहस्त्रं च मानवान्कर्मठान्पुनः ॥
अब्रवीत्कर्मवृद्ध्यर्थं भारतं हि स्वयोगतः ।
एवमेवाऽपरं दिव्यं चतुर्दशसहस्त्रकम् ॥
स्वस्तये प्राकृतानां च शुकोऽपश्यत्स्वतेजसा ।
तथा चाऽप्राकृतानां च शुद्धानां शर्मणे पुनः ॥
शिष्यो व्यासस्य धर्मात्मा वैशंपायनपुण्यधीः ।
लक्षग्रन्थात्मकं तच्च दृष्टवान्स्वतपोबलात् ॥
नारदश्चोर्ध्वलोकेषु चिकीर्षुर्मङ्गलायनम् ।
वह्विलक्षप्रबन्धैश्च वर्धयामास तत्पुनः ॥
एवं नानाविधं चासीद्भारताख्यानमुत्तमम् ।
सर्वदर्शनसंपूर्णं सर्ववेद्यं च शुद्धिदम् ॥"

इति। ततोऽस्त्येव हि सर्वेषां च दर्शनानां कालंगत्या खिलत्वं च वृद्धिह्रासरूपम्। दृश्यतेऽत्र हि सोऽयं काश्यपधान्याचार्य-संवादश्च शुद्धदर्पणे। तथाहि—

"काश्यपः—महाचार्य! कथमिव परिष्कार्यमिदं भारताख्यान-मस्माभिः, दोषश्चाऽस्मिन्हि महान्भवति महतां च दिव्योक्तीनां परिष्कारकर्मणि। कर्मणाऽनेन हि शब्दशक्तेर्धारा विच्छिन्ना भवेदिति विज्ञायते।

धानी—शृणोतु भगवन्, आरभ्याक्षरमण्डलादापुरुषमण्डलं च सूत्राक्रान्ता व्यवसायपराः कर्मभक्तिज्ञानयोगस्वरूपाश्चत्वारः संसाराश्च पङ्क्तयः, महाकालचक्रसंस्थिता एव परिभ्रमन्ति। अत एव हि सर्वं साधनचतुष्टयं च कालाऽनुगुणं प्रशस्यते। कालाऽनुगुणमेव हि ब्रह्म परिणमते, समुपास्यते च तदात्मेति प्रकृतौ शक्तिरिति। आत्मा प्रकृतिश्चेत्युभे प्रत्यक्षसिद्धे भवतः। तस्मात्सर्वं कालाऽनुगुणमेव प्रकाशते।

काश्यपः—भगवन्नेवमस्तु, धर्मव्यतिक्रमोऽपि कालाऽनुरूप एव हि विज्ञायते। ततः कालद्वैविध्यमपि विज्ञायते, दुष्टः पुण्य इति। भेदोऽयं हि विद्वद्भिश्चाऽवश्यं सम्यगभ्युपगन्तव्यो भवति। कालस्य हि दुष्टां गतिं च परिभाव्य साधवः प्राचीनांश्च धर्मान्लोकाननुशासति। कालानुरूपो भगवदवतारश्चाऽपि तादृश-धर्मोपदेशायैव भवति। तस्मादेव हि दुष्टकालाऽनुगुणः शास्त्रपरिष्कारश्च दोषायैव भवतीति श्रूयते। अतस्तत्त्वं व्याख्यातु भवान्धर्मवित्त्व।

धानी—अहो भगवः? सत्यमत्र श्रोतुमर्हति। कालविरुद्धश्च न कोऽपि धर्मश्चलति। कालो हि दुरतिक्रमः। कालानुगुणधर्मबोधकं हि शास्त्रं तदधिकारिपुरुषाऽनुशास्यं भवति। अतश्च कालस्वभावविरुद्धेभ्यो धर्मव्यवसायेभ्यो निवृत्तिश्च लोकनाथधर्मनाथनारायणसिद्धान्तसिद्धा हि चकास्ति। अतो हि धर्मानुशासनं सर्वमपि तत्तन्महर्षिप्रणीतं च कालाऽनुगुणं लोकसंरक्षणधर्मपरैर्महर्षिभिः श्रद्धया च विशुद्धया सुपरिष्कार्यं भवति। अत एव भगवान्भार्गवोऽपि भगवन्नारायणांशश्च, भारताख्यानरहस्यार्थप्रवचनपराणां च सूत्राणां चतुर्विंशत्संख्यां च चतुर्विंशत्साहस्रीमकरोत्। अतस्तदिदं भारताख्यानं हि शुद्धदर्शनशास्त्रं समामनन्ति शुद्धार्याः। ततस्तादृशो हि कृष्णद्वैपायनो महर्षिः, तैस्तैश्च पुण्यश्लोकोपाख्यानैस्तदिदं चतुर्विंशत्सहस्रं भार्गवं च भारतं शास्त्रं लक्षग्रन्थात्मकं व्याजहार। तदेव हि लोकशङ्करं भवति। तदेव हि कालगत्या खिलं च समभवत्। तत्खिलत्वाऽसाधारणं कारणं तु शास्त्राणां काललोकाऽननुगुणस्थितिरेवेति विज्ञायते। तस्माद्वयं सर्वेऽपि भगवन्नारायणाऽनुगृहीताश्च तदिदं भारताख्यानं श्रीकृष्णद्वैपायनप्रकाशितं महार्थं जंबूकादिद्विजदूषितं संपरिष्कुर्याम" इति। एवं महर्षिगोभिलेनाऽपि, यथाकालं विद्यानां खिलत्वम्, महर्षिभिस्तत्परिष्कारः, परिष्कर्तॄणां महर्षीणां स्वभावश्चेत्यादिकथितम्—

"विद्याः सर्वाश्च कालेन खिलाः स्युर्जगतीतले ।
खिलानां च परिष्कारकर्म कार्यं मनीषिभिः ॥
केचिन्महर्षयो लोके तत्तत्समयवादिनः ।
यथेच्छं परिष्कुर्वन्ति प्रबन्धानखिलान्खिलान् ॥
तत्परिष्कृतशास्त्रेषु प्रवणाः पूर्वसूरिणः ।
अज्ञातशुद्धतत्त्वार्थाः स्वार्थावेशाद्भ्रमन्ति ते ॥
अन्ये केचिन्महात्मानः शुद्धतत्त्वार्थवादिनः ।
ज्ञात्वा च तादृशं ब्रह्म पूर्णा यान्ति परं पदम् ॥"

इति । अत्र च "कालेन खिलाः" इत्यनेन सर्वदर्शनानां सर्वविद्यानां च खिलत्वम्, तत्परिष्कारश्च, लोकेश्वरभगवन्नारायणसत्यसङ्कल्पसिद्ध इत्यन्यत्र विस्तरः । एवं विद्यानां च सर्वासां ब्रह्मस्वरूपव्याख्यानपराणां च तत्त्वदर्शनस्वरूपत्वमित्थं श्रूयते—

"आत्मसंज्ञः शिवः शुद्ध एक एवाऽद्वयः सदा ।
ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥
जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते ।
विद्याऽविद्यादिभेदेन भावाऽभावादिभेदतः ॥
गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ।
ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने ॥"

इत्यात्मोपनिषदि । एवमुत्तमस्य धर्मस्य षडङ्गपादचतुष्टयनियमश्चाऽपि श्रूयते । किं च गायत्रीप्रणवयोश्च समन्वयेनाऽध्ययने

चतुर्विंशत्तत्त्वानां स्वरूपं विज्ञायते। प्रणवो भवति परा विद्या। ततो गायत्रीप्रणवाभ्यां च सर्वविद्यापितृभ्यां चत्वारो वेदाः, उपवेदाः, षडङ्गानि, सर्वाः कलाश्च संभवन्ति। ततः शब्दतोऽर्थतश्च गायत्र्या माहात्म्यं तत्र तत्र श्रूयते। शब्दपरा च सा गायत्री छन्दःप्रधाना भवति। तत एव "गायत्री छन्दसां माता" इति श्रूयते। सा च गायत्री षडक्षरचरणा विज्ञायते छन्दःप्रबन्धैः। अर्थपरायाश्चाऽपि षड्धर्मचरणत्वं विज्ञेयम्। अष्टाक्षरा तु साऽनुष्टुप् भवति। तस्माद्ब्रह्मविद्यानां च सर्वासां शब्दाऽर्थपराणां तत्त्वसक्तत्वेन महच्च गौरवं भवति सिद्धम्। अत एवोक्तं महर्षिगोभिलेन—

"धर्मः प्रवृत्तिरूपश्च तत्त्वसक्तः प्रदृश्यते।
निवृत्तिरूपश्च तथा धर्मोऽन्यस्तत्त्वलक्षणः॥
इन्द्रियाणि दशैवं हि भूतानां चैव पञ्चकम्।
तन्मात्राः पञ्च चाव्यक्तं महन्मानसमेव च॥
अहंकार इमान्याहुस्तत्त्वानीति महर्षयः।
सर्वो धर्मोपदेशश्च तत्त्वमूलो हि दृश्यते॥
ततो विद्याः समस्ताश्च विज्ञेयास्तत्त्वलक्षणाः।
चतुर्विंशतिभिर्भक्ताश्चेति संसारिभिः सदा॥"

इति। एवं हि महाभारतरहस्यार्थो महर्षिकृष्णद्वैपायनेनाऽभिवर्णितो भवति ज्ञानाऽज्ञानव्यवसायस्वरूपव्याख्यानरूपः—

"दुर्योधनो मन्युमयो महाद्रुमः
कर्णस्कन्धः शकुनिस्तस्य शाखाः।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥"

इत्यादिपर्वणि महाभारते। अनेनाऽस्मिंश्च कर्मपरे मानुषे भुवने, शुद्धानामशुद्धानां च स्वरूपम्, तदनुगुणो व्यवसायश्च वृक्षद्वय-दृष्टान्तमुखेन ह्यावेदितो भवति। देवस्वभावानां हि भवति स्वव्यवसायमूलं ज्ञानम्, तदासुरस्वभानां तु तद्व्यवसायमूलं चाऽज्ञानमित्याद्यन्यत्र निरूपितम्। तदेतदुभयं चाऽपि सङ्कल्पनायक-भगवन्नारायणशुद्धव्यवसायादेव भवतीति सिद्धान्तः। तदुक्तं भगवता वासुदेवेन—

"बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावः भयं चाऽभयमेव च ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥"

इति। तस्माद्भगवान्सत्यवतीसुतश्च कृष्णद्वैपायनो व्यासः, स्वतपः-प्रसूते च महाभारते ज्ञानाऽज्ञानमूलव्यवसायस्वरूपमावेदयतीति-प्राचीनार्यसिद्धान्तः। तथा चोक्तं गोभिलेन—

"शुद्धधर्मपराः सर्वे शृण्वन्तु मुनिपुङ्गवाः।
अहङ्कारो महावृक्षो जगत्कारणमुच्यते॥
स च मन्युमयो यज्ञस्याऽधिष्ठानं निगद्यते।
दुष्टस्कन्धो दुष्टशाखो दुष्टपुष्पफलोदयः॥
रक्षकश्चाऽस्य यो मूढः स च शान्तिं न चेष्यति।
शुद्धधर्मो महावृक्षः शुद्धस्कन्धः परः शुचिः॥
भीमशाखो ब्रह्मसक्तो ह्यसक्तः सर्वभूमिषु।
शुद्धदिव्यफलः श्रीमानस्य संरक्षकः कलौ॥
अमृतं च शुभां शान्तिं पुमान्सोऽयं समश्नुते।
स च सर्वात्मभूतात्मा परमात्मा पराऽवरः॥
पुरुषोत्तम इत्युक्तस्तस्माज्ज्ञानं परं भवेत्।
शुद्धं सर्वार्थभावं च सर्वस्यैक्यप्रदं च यत्॥
अतश्च भगवान्देवः शुद्धसङ्कल्पनायकः।
श्रीकृष्णो बदरीनाथश्चेत्थं पार्थाय चादिशत्॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥
इति धर्मरहस्यं हि शुद्धैर्वेद्यं प्रयत्नतः।
अहङ्कारमहाशत्रुं मित्रं कृत्वा यथाविधि॥

ब्राह्मीं शक्तिं महारूपां नानाङ्गीं समवाप्य हि ।
यस्मिन्सर्वाणि भूतानि भावाऽभावौ स्वभावतः ॥
विश त्वं तत्परं धाम ततस्त्वं स्वस्वभावतः ।
कर्तव्यानीति कर्माणि सर्वाण्यावश्यकानि च ॥
कुरु तस्माद्विनिर्मुक्तो याहि तच्च परं पदम् ।
इति धर्मरहस्यार्थः पुरा नारदभाषितः ॥

इति । एवं चात्र महार्थं कृष्णद्वैपायनप्रणीतं कादाचित्तज्जंबूकादिब्राह्मणशिथिलितं च भारताख्यानम्, तथाऽन्यप्रकारं च भारतं भार्गवाद्युक्तम्, भगवन्नारायणाद्याश्च महर्षयः स्वतपःप्रभावेन परिष्चक्रुश्चेति विज्ञायते । तथैवोक्तमाचार्यगोभिलेन—

अथ नारायणमुखाः कुमाराद्या महर्षयः ।
चतुर्विंशति साहस्री या पुरा भार्गवोदिता ॥
तां वै यथावदाज्ञाय परिष्चक्रुश्च संहिताम् ।
एवं हि पुण्यपुंसां च शुद्धानां वै महात्मनाम् ॥
धर्मोपाख्यानरत्नैश्च भूषितं शुद्धयोगतः ।
कृष्णद्वैपायनकृतं परिष्चक्रुर्यथाविधि ॥
तदिदं भारतं लोके व्यवसायसुसाधनम् ।
संसारिणां च सर्वेषां महदस्ति महर्षयः ॥
कुमारनारदौ चैव प्राचीना हंसयोगिनः ।
लोकाधिकारिणश्चैव तथान्ये शुद्धयोगिनः ॥

तां वै महासंहितां च भारताख्यां महार्थदाम् ।
यथावत्संपरीक्ष्याथ परिष्चक्रुः स्वतेजसा ॥
तस्मात्परिष्कृता शुद्धैः संहितेयं पुमर्थदा ।
अध्येया साधुभिः शुद्धैः परप्रेप्सुभिरादरात् ॥
एवं दृष्टं देवलाद्यैः परिष्चक्रुश्च भारतम् ।
तथैव सर्वविद्याश्च शिथिलाश्चैव कालतः ॥ "

इति । एतमेवाह भगवान्नारदश्च महाभारतार्थसंग्रहे—

"यथा वेदाः समस्ताश्च साङ्गा वै ब्रह्मणा पुरा ।
लोकानां धारणार्थाय दृष्टाः स्युः स्वरयोगतः ॥
तथा प्रतियुगं नैव सन्तीति कवयो विदुः ।
अत्रेदं कारणं चेत्थं शृण्वन्तु मुनिपुङ्गवाः ॥
वेदास्ते भूतपूर्वाश्च तत्तत्कालोपयोगिनः ।
वेदव्यासेन संभक्ताः केचिन्नाष्टा भवन्ति च ॥
एवं हि सेतिहासाश्च स्मृतयो हि सहस्रशः ।
कालधर्मं समासाद्य खिलाः सन्तीति निर्णयः ॥
कालोपयोगिनी विद्या लोकसेव्या भवेदथ ।
काललोकविरुद्धा या सा खिलेत्यवधार्यताम् ॥
आद्यं हि भारताख्यानं दृष्टं यद्भृगुसूनुना ।
अनन्वयात्खिलं तच्च पुनरेव महामतिः ॥
कृष्णद्वैपायनो व्यासो ब्रह्मणा चोदितः स्वयम् ।
परिष्चकार यत्नेन त्रिभिर्वर्षैः स्वयोगतः ॥ "

इति। अनेन सर्वेषां प्रबन्धानां कालगत्या खिलत्वं तथा तत्परिष्कारश्च सर्वं सुप्रसिद्धं भवति। इत्थं हि भारतवैभवो महर्षिगोभिलेनोच्यते—

"सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते।
भारतान्न परं शास्त्रं चास्ति लोके महार्थदम्॥
मन्वादिभारतं लोके ह्यनुत्तममुदाहृतम्।
कारणं तत्र विज्ञेयमिदमेवेति निर्णयः॥
मनुश्चैव महाभाता गायत्रीत्यवधार्यताम्।
षट्कोणचरणा देवी गायत्रीति निगद्यते॥
अष्टाक्षरा च सा देवी चानुष्टुबितिगीयते।
इदं हि मानवं तन्त्रं षट्चक्रभ्रमणं परम्॥
षट्चक्रभ्रमणादेव सृष्टिर्वै ब्रह्मणो भवेत्।
प्रथमाच्च द्वितीयात्तु तस्मात्संजायते स्थितिः॥
भ्रमणात्तस्य चक्रस्य तृतीयाद्योग उत्तमः।
सोऽयं समाहाररूपश्चेति नारायणोदितम्॥
तस्य षट्कोणचक्रस्य भ्रमणैः षड्भिरात्मनः।
व्यवसायाः स्वकीयाश्च जायन्ते तत्त्वलक्षणाः॥
संसारेऽस्मिंश्च सर्वत्र तत्त्वयुक्तं सनातनम्।
ब्रह्मैव वेद्यं शुद्धं च नेतरच्चेति निर्णयः॥
आब्रह्म स्तंबपर्यन्तं जगत्सर्वं चराचरम्।
ईशेशितव्यसंबद्धं चैकेनैवाऽस्ति निर्णयात्॥

तत्त्वविद्याः समस्ताश्च गायत्रीसंज्ञयोदिताः ।
षट्चक्रभ्रमणस्याऽस्य संसारस्य महर्षयः ॥
द्वादशाक्षरवाच्यश्च द्वादशात्मा महेश्वरः ।
गायत्र्या समुपास्यः स्याद्गायत्री सा महेश्वरी ॥
सर्वतत्त्वस्वरूपेति श्रुतिभिः समुदीर्यते ।
परमात्माऽऽत्मजीवाश्च द्वादशात्मान उच्यते ॥
द्वादशात्मा च भगवान्सूर्यो नारायणो विभुः ।
संसारस्याऽस्य देवोऽयं नायकश्चेति कथ्यते ॥
ततः संसारनियता विद्या या तत्त्वलक्षणा ।
सेयं भगवती साक्षाद्गायत्रीत्यवधार्यताम् ॥
भूतानां पञ्चकं चैव मनश्चैतानि षट् स्वयम् ।
गायत्रीत्याख्यया वेदाः प्रवदन्ति महर्षयः ॥
या हि विद्याश्च जगतां तत्त्वशिक्षापरा मताः ।
सर्वाश्चैताः समाख्याता गायत्रीति महर्षयः ॥
प्रणवान्तस्थिता देवी गायत्री च यथा भवेत्
तादृश्यश्च तथा विद्याः प्रणवान्तःस्थिता मताः ॥
संसारव्यवसायस्य निश्चयो बुध्यते यया ।
सा हि गीता महार्था च श्रीकृष्णवदनोदिता ॥
तत्त्वविद्या महामाता चतुर्विंशतिविक्रमा ।
गायत्रीपादसंभूता प्रणवान्तपरायणी ॥

एवं विधां ब्रह्मविद्यां योगगर्भो स्वयोगतः।
कृष्णद्वैपायनो व्यासो धर्मात्मा योगिनां वरः॥
मध्येमहाभारतं च ग्रथ्नाति स्म स्वयोगतः।
ततश्च भारतं लोके ह्युत्तमोत्तममुच्यते॥"

इति। एवं महाभारतस्य शुद्धधर्माख्यानपरत्वमपि गोभिलेनोक्तं भवति—

"मानवं परमं पुण्यं पवित्रं च महर्षयः।
तदिदं भारतं शास्त्रं शुद्धदर्शनमुच्यते॥
अन्येषु भारतेष्वेषा गीता नैव हि दृश्यते।
तस्माच्छुद्धैरिदं वेद्यं भारतं परमाऽमृतम्॥
भारतः पञ्चमो वेदः पञ्चमार्थस्य वेदनात्।
पञ्चमः पुरुषार्थश्च प्राप्तिरित्यवधार्यताम्॥
परप्राप्तिर्हि वेदेषु मुमुक्षूणां फलं मतम्।
जानन्ति ये भारतार्थं ते वै तत्त्वविदां वराः॥"

इति। तस्माद्भारताख्यानमिदं पञ्चमपुरुषार्थदं तत्त्वपरं भगवन्नारायणांशश्रीकृष्णमुखाब्जविनिसृतगीतामृतगर्भंसर्वपापहरं च संसारव्यवसायपरैर्मुमुक्षुभिश्च सनियमक्रममध्येयं भवतीति सर्वसमञ्जसम्।

इति श्रीहंसयोगिविरचितः
महाभारतपञ्चदशोपोद्घातः
संपूर्णः




## श्रीभगवद्धंसयोगिविरचितः

### श्रीभगवद्गीतोपोद्घातः ।

नमस्ते नरदेवाय नमो नारायणाय च ।
बदरीवननाथाय योगिनां पतये नमः ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
नरनारायणाज्जातौ जगतः स्थितये स्थितौ ।
शुद्धसङ्कल्पनाथौ च वन्दे कृष्णार्जुनौ सदा ॥
पूर्वाचार्यान्कुमारादीन्महर्षीन्प्रणिपत्य हि ।
व्याख्यास्यामो यथातत्त्वं गीतां कृष्णमुखोदिताम् ॥

ओं श्रियः पतिर्भगवान्विविधविचित्रशक्तिसंयुक्तः सर्वज्ञः सत्यसङ्कल्पः संपूर्णकामः सर्वार्थदः सर्वसेव्यः सर्वैश्वर्यसंपन्नः परमकारुणिको यथाकालं हि सर्वधर्मशास्ता शुद्धधर्माऽधिकारी लोकाभ्युदयसाधनसर्वकर्मपरः सर्वेश्वरश्च परमात्मा नारायणः,

भूभारहरणार्थं स्वेरितधर्मसंरक्षणार्थं च स्वमहात्मभावसहजया ह्येषया च मायया शक्त्या वसुदेवपुत्रत्वेनाऽवतीर्य, लीलामानुषविग्रहः श्रीकृष्णाभिधानश्च सन्स्वकीयं चाश्रितवात्सल्यजलधित्वमाविश्चिकीर्षुः पार्थसारथिर्भूत्वा, कुरुक्षेत्रे हि सति महति च कुरुपाण्डवयुद्धे समारब्धे, सति च स्वव्यवसायफलोन्मुखे हि समये, प्रथमं हि स्वकर्तव्यधर्मकार्यदर्शिने स्वांशभूताय लोकप्रतिनिधये नराय चार्जुनाय स्वव्यवसायक्षमां ब्राह्मीं च शक्तिं सानुग्रहं संप्रदाय, अथ सति प्रवृत्ते च शस्त्रसंपाते—सेनयोरुभयोर्मध्ये तु समवस्थितांश्च सर्वान्स्वबन्धून्समीक्ष्य स्वलोकप्रतिनिधिस्वरूपानुरूपया च लोकभावनया. कर्तव्ये ह्यावश्यके कर्मणि चाऽविज्ञानमूलदोषदुष्ट इवाऽनुशोचते, स्वार्थाऽऽवेशेन ह्यनीशया च वैक्लव्यं समापन्न इव चेष्टमानाय, महनीयवधे पापमाशङ्कमान इव चात्मनो माधूकरीं वृत्तिं च याचमानाय, सर्वाधिकारिपुरुषसंवेद्यशुद्धसनातनधर्मजिज्ञासार्थं हि पुनः "शिष्यस्तेऽहम्" इत्यात्मानमावेद्य स्वचरणसरसिजमेव योगिध्येयं च स्वरूपानुरूपया त्वनन्यभावनया शरणं संप्रपन्नाय तस्मै पार्थाय, तद्धार्ददोषनिवृत्तिपूर्वककर्तव्यनिर्णयाय हि तामिमां गायत्रीलक्षणां ब्रह्मसंमितां चतुर्विंशतिगीतात्मिकां योगब्रह्मविद्यास्वरूपां च श्रीभगवद्गीतां यथाधिकारं यथाक्रमं च समुपदिदेश।

## (१) गीतावतारनिरूपणम्।

इत्थं हि मध्येमहाभारतं गीतावतारो विज्ञायते-अथ च भगवान्सर्वं प्रत्यक्षदर्शी सत्यवतीसुतश्च कृष्णद्वैपायनो व्यासः, युयुत्सया हि कुरुक्षेत्रसंगतानां कुरूणां पाण्डवानां च—

"उदतिष्ठद्रजो भौमं न प्रज्ञायत किं च न।
अस्तं गत इवादित्यः सैन्येन रजसावृतः॥
ववर्ष तत्र पर्जन्यो मांसशोणितवृष्टिमान्।
व्युक्षन्सर्वाणि सैन्यानि तदद्भुतमिवाभवत्॥
वायुस्ततःप्रादुरभून्नीचैः शर्करकर्षणः।
विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः॥
उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशम्।
कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे॥
तयोस्तुसेनयोरासीदद्भुतः स तु संगमः।
युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव॥
शून्याऽऽसीत्पृथिवि सर्वा वृद्धबालावशेपिता।
तेन सेनासमूहेन समानीतेन कौरवैः॥
यावत्तपाति सूर्यो हि जंबूद्वीपस्य मण्डलम्।
तावदेव समावृत्तं बलं पार्थिवसत्तम॥"

इत्यभिवर्णिते साङ्गेऽतिसमृद्धे च पूर्वाऽपरे सैन्ये हि सुसमीक्ष्य, वैचित्र्यवीर्यं स्वसुतभाविविपर्ययविज्ञानसंजातदुःखं तथा स्वपुत्रा-

णांमनयं चिन्तयन्तं शोचन्तमार्तं च रहस्थं राजानं समेत्य, तेन च राज्ञा समभिपूजितस्तच्छोकं च निवर्तयितुं तस्मै चेत्थम्—

राजन्परीतकालस्ते पुत्राश्चान्येऽपि पार्थिवाः ।
ते हिंसन्तीव संग्रामे समाद्येतरेतरम् ॥
तेषु कालपरीतेषु विनश्यत्स्वेन भारत ।
कालपर्य्यायमाज्ञाय मा स्म शोके मनः कृथाः ॥
यदि चेच्छसि संग्रामं द्रष्टुमेनं विशांपते ।
चक्षुर्ददानि ते पुत्र युद्धमेतन्निशामय ॥"

इत्यवदत् । ततो हि राजनि धृतराष्ट्रे कालगतिं च तां विशेष-दृष्ट्या हि यथावद्विज्ञाय, पुनस्तमित्थम्—

"न रोचते ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम ।
युद्धमेतदशेषेण शृणुयां तव तेजसा ॥
दिष्टमेतत्पुरा मन्ये भविष्यति नरक्षयः ।
राजानः क्षत्रधर्मेण यद्विवध्यन्ति संयुगे ॥
वीरलोकं समासाद्य सुखं वत्स्यन्ति केवलम् ।
इह कीर्तिं परे लोके दीर्घकालं महत्सुखम् ॥"

इति, यथादेशं यथाकालं च तत्तदधिकारिणां स्वस्वरूपानुरूप-संसारकार्यकर्मरूपे च युद्धे ज्ञातीनां वधस्य दर्शने महान्तं दोषं स्वार्थपराणां मनःकालुष्यहेतुं चाकलय्य, युद्धवृत्तान्तश्रवणव्याजेन तद्युद्धप्रवृत्तिमूलधर्मपरिज्ञानाय केवलं सांसारिकस्वार्थावेशाकार्य-सुखदुःखसमीकरणसाधनं सन्न्यासत्यागहेतुपरमफलं शुद्धं च सनातनं धर्ममेव परिपृच्छति, तथा स्वक्षात्रधर्मपराणां च स्वपुत्राणां लोकेश्वर भगवन्नारायणसत्यसङ्कल्पपरिकल्पिते तत्त-त्कालाधीनलोकावश्यके च विनाशे परमभ्युदयं सामोदमावेदयति च, भगवानसौ व्यासस्तमभिनन्द्य, साकं हि तेन राज्ञा मुहूर्तं ध्यायति स्म । एवं महर्षिणा धृतराष्ट्रेण राज्ञा च सानुनयं सरहस्यं चोक्तेषु वाक्येषु तादृशोक्तिप्रत्युक्तिरूपेषु च त्रिषु. प्राचीनार्यरहस्यार्थश्चेत्थं विज्ञायते—किमर्थमसौ भगवान्व्यासः सकाशं हि राज्ञो धृतराष्ट्रस्याऽऽगच्छदिति प्रश्ने, भगवल्लोकाधि-कारिस्थानं समधिष्ठिताभ्यां कृष्णार्जुनाख्याभ्यां च नरनाराय-णाभ्यां स्वसत्यशुद्धसिद्धसङ्कल्पेन परिकल्पिते भारते युद्धे श्रोतव्याद्द्रष्टव्यस्य विषयस्य गौरवमन्धत्वं च राज्ञो ह्यभिवीक्ष्य, स्वाधिकारकर्तव्यकर्मनिर्वाहको हि पुत्रवात्सल्याभिबद्धश्च भग-वान्व्यासस्तस्मै च चक्षुर्दानार्थं समागतः, इति विज्ञायते । अत एव समागतोव्यासः स्ववाक्यावसाने "चक्षुर्ददानि ते पुत्र युद्धमे-तन्निशामय" इति व्याचख्यौ । अतो भगवतो महर्षेः व्यासाधि-कारश्च प्रकृते द्विविधो हि विज्ञायते । "तद्विद्धि प्रणिपातेन परिप्रश्नेन

सेवया" इति शिष्यलक्षणलक्षितेभ्यो ह्यधिकारिभ्यस्तत्त्वोपदेशो ज्ञानिनां विशिष्टानां चावश्यको हि धर्मो भवति। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति भगवदुक्तेश्चाऽनुगृहीतं भवति ज्ञानिनां तत्त्वोपदेष्टृत्वम्। तस्य च तत्त्वदर्शिनामन्यतमत्वेन तत्त्वोपदेशाधिकारः प्रथमो भवति। अपरश्च स्वप्रभावात्केवलं चक्षुर्दानरूपः। एवमधिकारद्वयासक्तश्च महर्षिर्भगवानसौ नेत्रदानार्थं राज्ञः समीपमभ्युपागमदिति विज्ञेयम्। प्रथममुपपादितैश्च व्यासवाक्यैस्त्रिभिः क्रमशः, तुरीयावस्थोपहितस्य कालाख्यस्य भगवतो नारायणस्य सङ्कल्पे तु तुरीये सर्वेषां स्वरूपपरिणामः शाश्वत इति, कालाविष्टेषु वस्तुषु बहुधा परिणाममेष्यत्सु कालकर्मविज्ञानिभिरधिकारिभिश्च समभाव एव स्वीकार्यो भवतीति, कालकर्मपरिज्ञानस्य सद्गुरुप्रसादाधीनत्वं चेति विज्ञायते। व्यासोक्ततृतीयवाक्यस्थेन च चक्षुरशब्देन कालकर्मसाक्षात्कारकारणं ज्ञानमपि च तत्त्वपरं लक्ष्यते। कालकर्मणोऽपि मुमुक्षुवेद्यत्वमित्थम्—

"योगिभिर्ज्ञानिभिश्चैव त्यागिभिर्यतिभिस्तथा।
लोकाभ्युदयनिष्ठैश्च राजहंसैर्मुमुक्षुभिः॥
द्रष्टव्यं कालकर्म स्यात्कालतन्त्रविचारतः।
कालकर्मपरिज्ञानात्परं तत्प्रतिपद्यते॥"

इति, भगवत्कुमारवचनादवगम्यते। एवं धृतराष्ट्रोक्तेषु च त्रिषु वाक्येषु प्रथमेन हि-सन्यासत्यागविरहितानां स्वार्थपराणामशुद्धानां च ह्यधिकारिणां सत्यपि गुरोः सन्निधाने त्वशक्तत्वान्न काल-

कर्मदर्शनाधिकारः स्वीकार्यो भवति, किं तु मन्दाधिकारिणां च तेषां मुमुक्षूणां कालकर्मरहस्यवृत्तान्तश्रवणमेव समुचितम्, ततः स एव वक्तव्यो भवतीत्युक्तं भवति । अनेन हि यदागमनप्रयोजनं महर्षेस्तृतीयवाक्याऽवगतं च केवलं चक्षुर्दानं युद्धसाक्षात्कारसाधनम्, तन्निषिद्धमिति विज्ञायते । अत्र महर्षेस्तृतीयवाक्यस्य राज्ञः प्रथमवाक्यमुत्तरमिति भावः । एवं तस्य राज्ञो द्वितीयवाक्येन तु—ब्रह्मस्वभावसिद्धस्य तत्तत्कालनियतस्य च जनक्षयस्य वेत्तृत्वं स्वस्याऽस्तीत्युक्तं भवति । अनेन महर्षेः प्रथमवाक्यार्थः समवगत इत्यभिहितं भवति । अतश्च महर्षेः प्रथमवाक्यस्य राज्ञोऽस्य द्वितीयवाक्यमुत्तरमस्तीति विज्ञेयम् । तथा राज्ञस्तृतीयवाक्येन-शास्त्रीयजनक्षयस्य च भगवत्संमतस्य सफलत्वेनाभ्यर्हितत्वमस्तीत्युक्तम् । अनेन स्वस्य समभावराहित्ये सत्यपि, सफलकर्मवृत्तान्तश्रवणेनाऽसंक्षुण्णहृदयत्वं स्वस्य भवेदित्युक्तं भवति । ततो महर्षेर्द्वितीयवाक्यस्य राज्ञस्तृतीवाक्यमुत्तरं भवतीति भाव इति । एतदनुसृत्यैव भगवानेवमाह गोभिलः—

"कृष्णद्वैपायनो व्यासो ज्ञानी सत्यवतीसुतः ।
प्रवृत्ते भारते युद्धे स्वपुत्राणां विशेषतः ॥
अधर्मव्यवसायं च जन्मसिद्धं विगर्हितम् ।
वीक्ष्य स्वार्थाऽऽवेशतश्च शोचन्तं हि मुहुर्मुहुः ॥
ज्ञातव्यस्याऽपरिज्ञानाद्ध्यायन्तं परमं गुरुम् ।
धृतराष्ट्रं च राजानं समेत्य परया मुदा ॥

इदं जगाद वाक्यैर्हि त्रिभिर्ज्ञातव्यमादरात् ।
तत्कालस्य च माहात्म्यं ज्ञानिनां लक्षणं तथा ॥
ज्ञानिकार्यं च विधिवत्कालदेशोचितं परम् ।
एतद्विज्ञाय राजापि सर्वशास्त्रविशारदः ॥
स्वार्थदोषप्रशमनीं समभावप्रदां शिवाम् ।
विद्यां पप्रच्छ धर्मज्ञं महर्षिं परमं गुरुम् ॥"

इति । अथ ध्यानादुत्थाय हि भगवान्व्यासः, ज्ञातिवधस्य शास्त्रीयत्वं तद्दर्शने दोषं च मन्वानाय तस्मै च राज्ञे, ज्ञातिवधस्य गर्ह्यत्वं धर्मतः सन्धिकरणप्रकारं चेत्थं समादिशत्—

"असंशयं पार्थिवेन्द्र कालः संक्षिपते जगत् ।
सृजते च पुनर्लोकानिह विद्यति शाश्वतम् ॥
न वधः पूज्यते वेदे हितं नैव कथञ्च न ।
हन्यात्स एनं यो हन्यात्कुलधर्मं स्विकां तनुम् ॥
क्षुद्रं ज्ञातिवधं प्राहुर्माकुरुष्व ममाऽप्रियम् ।
लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ॥
कालोऽयं पुत्ररूपेण तव जातो विशांपते ।
कालेनोत्पथगन्तासि शक्ये सति यथाऽऽपदि ॥
कुलस्यास्य विनाशाय तथैव च महीक्षिताम् ।
अनर्थो राज्यरूपेण तव जातो विशांपते ॥
लुप्तधर्मा परेणासि धर्मं दर्शय वै सुतान् ।
ज्ञातीनां वै कुरूणां च संबन्धिसुहृदां तथा ॥

धर्म्यं दर्शय पन्थानं समर्थो ह्यसि वारणे ।
किं ते राज्येन दुर्धर्ष येन प्राप्तोऽसि किल्बिषम् ॥
यशो धर्मं च कीर्तिं च पालयन्स्वर्गमाप्स्यसि ।"

इति । अत्र च क्रमशः—सर्वक्षयकारकस्य कालरूपस्य भगवतः सर्वोत्तमत्वम्, सर्वेषां च पदार्थानां स्वरूपस्वभावादिभिरुत्तरोत्तरमभिवृद्धेः सर्वदैकरूपेणाऽनवस्थितेश्चाऽशाश्वतत्वम्, बन्धुवधस्य शिष्टाचारसिद्धवेदगर्हितत्वम्, धर्मतः पाण्डवानामेव राज्यस्वीकारयोग्यत्वम्, सर्वसंहारकस्य भगवत्कालपुरुषस्य दुर्योधनस्वरूपेणाऽवतीर्णत्वम्, तेनैव हि तवापि सर्वधर्मरहस्यार्थविदः संभ्रान्तत्वम्, अधर्मपरराज्यस्य सर्वानर्थहेतुत्वम्, वृद्धानां च स्वजनसंरक्षणार्थं धर्मोपदेशस्याऽऽवश्यकत्वम्, यशोधर्मकीर्तिपरिपालनस्यैव स्वर्गप्राप्तिहेतुत्वं चानुशिक्षितं भवतीति बुध्यते । एवं राजापि स्वपितुश्च महर्षेर्व्यासस्य वचो निशम्य तस्मै पुनस्तदित्थम्—

"प्रसादये त्वामतुलप्रभावं
त्वन्नो गतिर्दर्शयिता च धीरः ।
न चापि ते वशगा मे सुताश्च
न चाऽधर्मं कर्तुमर्हा हि मे मतिः ॥"

इति, स्वपुत्राणामधर्मगामित्वं तेषां त्वधर्मादनिवर्त्यत्वं च सनिर्वेदं विज्ञाप्य, महति युद्धे धर्मपराणामधर्मपराणां च जयापजयलक्षणस्य जिज्ञासुस्तं भगवन्तं पुनरपीत्थम्—

"यानि लिङ्गानि संग्रामे भवन्ति विजयिष्यताम् ।

तानि सर्वाणि भगवञ्छ्रोतुमिच्छामि तत्त्वतः ॥"

इति, विजयिनां तदन्येषां च लक्षणानि पप्रच्छ। ततो राज्ञः प्रश्नार्थस्य वेत्ता च भगवान्व्यासः—

"इह युद्धे महाराज भविष्यति महान्क्षयः।
तथैव च निमित्तानि भयदान्युपलक्षये॥
दिष्टमेतन्नरव्याघ्र नाभिशोचितुमर्हसि।
न चैव शक्यं संयन्तुं यतो धर्मस्ततो जयः॥
न बाहुल्येन सेनाया जयो भवति नित्यशः।
अध्रुवो हि जयो नाम दैवं चात्र परायणम्॥
एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यताम्।
यथालोकः समुच्छेदं नाऽयं गच्छेत भारत॥"

इति, तं राजानमवदत्। अत्र च प्रथमवाक्येन महर्षेर्जयापजयलक्षणाऽभिज्ञत्वम्, द्वितीयेन च "ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इत्युक्तेर्धर्मपदवाच्यभगवच्छ्रीकृष्णसमाश्रयणेन पाण्डवानां विजयित्वम्, तदभावेन दुर्योधनादीनामपजयश्च, तृतीयेन हि सर्वत्र दैवस्यैव जयाऽपजयहेतुत्वम्, तुरीयेन च राज्ञा स्थातव्यः प्रकारश्च कथितं भवति। अत्रत्यद्वितीयवाक्यार्थमित्थमाह भगवान्महर्षिर्गोभिलः—

"स्वार्थदोषश्च सर्वार्थप्रतिपत्त्या हि भिद्यते।
सर्वार्थप्रतिपत्तौ तु पौरुषं च विवर्धते॥
पौरुषादेव सर्वेऽपि भवन्ति जयशालिनः।

यदाश्रित्य हि लोकानां साम्यं स्यात्सुखदुःखयोः ॥
सर्वमावश्यकं चेति येन जानन्ति मानुषाः ।
तत्पौरुषं समाख्यातं देवीप्रकृतिभावितम् ॥
ये पौरुषं समाश्रित्य तिष्ठन्ति समबुद्धयः ।
तेषामेव यथाकालं सर्वमावश्यकं परम् ॥
तादृशाः पुरुषव्याघ्राः धर्माधर्मौ सुनिश्चितौ ।
विज्ञायैव यथारूपं धीराः सन्ति सुनिर्मलाः ॥
धीराणां चैव पुंसां तु विजयित्वं सुनिश्चितम् ।
सर्वार्थप्रतिपत्तिश्च भगवज्ज्ञानमुच्यते ॥
एवं मनस्स्वास्थ्यराज्यप्राप्तिरूपजयस्य हि ।
भगवद्धर्मविज्ञानं परमं कारणं भवेत् ॥
अतश्च भगवान्सर्वं वासुदेवः प्रभासते ।
विज्ञानाद्वासुदेवस्य जायते हि मनोजयः ॥
तदविज्ञानमूलश्च मृत्युर्वै नियतः सदा ।
अधर्मपदवाच्यश्च तस्माद्विद्वान्यथामति ॥
तत्तद्धर्मानुरूपं च फलं सदसदात्मकम् ।
परीक्ष्य निर्ममः शान्तो ब्रह्मभावाय कल्पते ॥"

इति । एवं महर्षिश्च राजानमुक्त्वा पुनरपि विस्तरशश्च जयाऽपजय लक्षणानि—

"एतानि जयमानानां लक्षणानि विशांपते ।
भवन्ति विपरीतानि मुमुर्षूणां जनाधिप ॥"

इत्यारभ्य "जयवन्तो हि संग्रामे कृतकृत्या भवन्ति हि" इत्यन्तैश्च प्रबन्धैर्जगाद । अथैवं ब्रुवति भगवति व्यासे, तद्वाक्यरहस्यार्थविच्च राजा धृतराष्ट्रस्तमित्थम्—

"त्वं हि धर्मः पवित्रं च यशः कीर्तिर्धृतिः स्मृतिः ।
कुरूणां पाण्डवानां च मान्यश्चाऽसि पितामहः ॥

इति, सविनयं तत्त्वजिज्ञासुश्च ज्ञातव्यमपृच्छत् । अनेन हि सर्वाभ्युदयसाधनतत्त्वज्ञानोपदेष्टृत्वं भगवतो व्यासस्यास्तीति, राज्ञा ह्यभ्युपगतमिति विज्ञायते । अथैतद्राज्ञो वाक्यार्थस्य विज्ञाता महर्षिरतिमात्रप्रीत्या च तमित्थमवदत्—

"वैचित्र्यवीर्य नृपते यत्ते मनसि वर्तते ।
अभिधत्स्व यथाकामं छेत्ताऽस्मि तव संशयम् ॥"

इति । अनेन सच्छिष्याणां स्वाचार्यसन्निधौ स्वचित्तदोषोद्घाटनमावश्यकमित्युक्तमिति विज्ञायते । एवमुद्घाटितदोषानिवर्तकत्वमाचार्यनियतं भवतीति च बुध्यते । तदुक्तम्—

"यो गूहयति मोहाच्च स्वात्मदोषं गुरोर्यदि ।
पुरतश्च तदा सोऽयं विमूढात्मा पतेदधः ॥
तस्माद्गुरोः सन्निधौ हि स्वात्मदोषं निवेदयेत् ।
शिष्यचित्तगुणज्ञश्च गुरुः सोऽयं विशिष्यते ॥"

इति, योगरहस्ये । अथैवं वदति महर्षौ, सर्वशास्त्रविच्च राजा धृतराष्ट्रः तद्वाक्यं संप्रशस्य, सर्वधर्ममूलभूतसनातनधर्मविज्ञानप्रतिबन्धकं स्वचित्तनिष्ठं च स्वार्थरूपं दोषमपनिनीषुस्तद्दोषनिवृत्ति-

पूर्वकतद्दिव्यज्ञानप्राप्त्युपायजिज्ञासुश्च सविनयमित्थं विज्ञापयामास—

"यथा भवान्वेत्ति तथैव वेत्ता
भावाऽभावौ विदितौ मे यथार्थौ।
स्वार्थे हि संमुह्यति तात लोको
मां चापि लोकात्मकमेव विद्धि॥"

इति। अत्रायं भावः—यच्च पुनर्ब्रह्मणो भावाऽभावात्मकं स्वरूपं ये च वा तदनुरूपाः कर्मज्ञानभक्तियोगाः, तेषां विज्ञातापि स्वार्थावेशदोषेण हि कर्तव्ये कर्मणि परिमूढो भवामि, यतो हि लोकश्चेतानाऽचेतनात्मकः सर्वोऽपि स्वार्थदोषेण हि विमूढो भवति। अतः स्वार्थदोषप्रशमनोपायं परप्राप्तिसाधनं च मे समुपदिशेति। या हि पुनर्निष्ठा परिप्रश्नाख्मा च ज्ञानिनाम्, सा चाऽस्मिन्धृतराष्ट्रे प्रकाशत इति नारदः प्राह। तदित्थम्—

"समेष्वर्थेषु सर्वेषु व्यवहारः पृथक्पृथक्।
येन वा जायते सोऽयं स्वार्थदोष उदीरितः॥
सोऽयं भवति सर्वेषु ज्ञानिषु प्राकृतान्वयात्।
तस्माद्गुराः सन्निधौ तु परिप्रश्नो यथामति॥
कार्यः स्याज्ज्ञानिभिर्नित्यं ततो दोषः प्रणश्यति।
स्वार्थो हि बलवान्दोषः सर्वधर्मेषु वै नृणाम्॥
त्रिविधो ह्यधिकारश्च ज्ञानिनां स्याद्यथागुणम्।
प्रणिपातपरश्चैकः परिप्रश्नपरस्तथा॥

सेवापरस्तृतीयश्च यथासंसारमेव हि ।
सनातनस्य धर्मस्य जिज्ञासा यस्य जायते ॥
परिप्रश्नपरः सोऽयमात्माऽनात्मप्रभाववित् ।
शाश्वतं योगमाप्नोति स्वार्थदोषस्य नाशतः ॥
एवं स धृतराष्ट्रोऽपि परिप्रश्नेन तं मुनिम् ।
तत्त्वं पप्रच्छ योगार्थं स्वार्थदोषप्रणाशकम् ॥"

इति । किं च तत्त्वदर्शिनो महात्मानश्च तेभ्यो न साक्षात्तत्त्वमुपदिशन्ति, ये तु परिप्रश्नपरा ह्यधिकारिणः, किं तु तेभ्यो ह्यधिकारिभ्यश्च स्वतपःप्रसूतैरेव यैः कैश्चिदधिकारिभिस्तत्त्वमुपदिशन्ति, इति तन्नारदवचनादेवाऽवगम्यते । तदित्थम्—

"प्रणिपातपरेभ्यश्च दासेभ्यो गुरवः पराः ।
नानापदार्थविज्ञानपरं तत्त्वं स्वयोगतः ॥
साक्षादुपदिशन्तश्च प्रापयन्ति च तान्परम् ।
परिप्रश्नपरेभ्यश्च न साक्षादुपदिश्यते ॥
स्वाधिकारिभिरेव स्यादुपदिष्टं हि तद्भवेत् ।
सनातनं ब्रह्मतत्त्वं तेभ्यश्चैव यथाविधि ॥
सेवापरेभ्यो मौनेन ज्ञातव्यार्थं यथाबलम् ।
कार्त्स्न्येनोपदिशन्त्येव तदिदं शुद्धसम्मतम् ॥"

इति । एवम् "अधिकारी च प्रणिपातपरः सर्वशास्त्रार्थविदपि तत्तत्त्वजिज्ञासुः स्वसद्गुरुमभिगच्छति, परिप्रश्नपरश्चाधिकारी सर्वशास्त्रार्थतत्त्वविदपि, स्वार्थावेशेन परिभ्रममाणः सर्वार्थपरसनातन-

धर्मजिज्ञासुराचार्यमभिधावति, सेवापरश्च ज्ञानयोगी निवृत्तस्वार्थ-दोषोऽपि तत्परप्राप्त्युपायजिज्ञासुर्गुरुमभिध्यायति" इति प्राचीनार्यरहस्यार्थश्चाप्यत्र विज्ञेयः। ततस्तपोनिधिश्च भगवान्व्यासस्तद्वाक्यश्रवणकुतूहली भगवन्नियन्त्रितश्च सन्, स्वतपसा सञ्जयं दिव्यदृष्टिमन्तं सर्वज्ञं योगिनं च संपरिकल्प्य, तं च राज्ञः सविधे संस्थाप्य, तत्सदाचार्यसञ्जयप्रभावमित्थमाह—

"एष ते सञ्जयो राजन्युद्धमेतद्वदिष्यति।
एतस्य सर्वं संग्रामे न परोक्षं भविष्यति॥

चक्षुषा सञ्जयो राजन्दिव्येनैव समन्वितः।
कथयिष्यति ते युद्धं सर्वज्ञश्च भविष्यति॥

प्रकाशं वाऽप्रकाशं वा दिवा वा यदि वा निशि।
मनसा चिन्तितमपि सर्वं वेत्स्यति सञ्जयः॥

नैनं शस्त्राणि भेत्स्यन्ति नैनं बाधिष्यते श्रमः।
गावल्गणिरयं जीवन्युद्धादस्माद्विमोक्ष्यते॥

अहं तु कीर्तिमेतेषां कुरूणां भरतर्षभ।
पाण्डवानां च सर्वेषां प्रथयिष्यामि माशुचः॥"

इति। आदितश्चैभिश्चतुर्भिर्वाक्यैर्हि महिमा चैवं सञ्जयस्य प्रतिपाद्यते—तत्र प्रथमेन सञ्जयस्य लोकतन्त्राभिज्ञत्वेन सामान्यधर्मविज्ञातृत्वम्, द्वितीयेन हि दिव्यज्ञानवत्त्वेन विशेषधर्मविज्ञातृत्वम्, तृतीयेन योगित्वेन स्वरोदययोगासिद्धत्वम्, तुरीयेन हि ब्रह्म-

ज्ञानित्वेन प्रतिबन्धकाऽबाध्यत्वं च प्रतिपादितं भवति । तत-सर्वाभ्युदयतत्परो महर्षिश्चैवमुक्त्वा स्वाश्रमं प्रययौ ।

अथ च श्रुत्वैतद्धि राजा धृतराष्ट्रो मुहूर्तं ध्यानमास्थितश्च व्यासादिष्टं सन्निहितं स्वसदाचार्यप्रसादसमुपलब्धदिव्यचक्षुषोपेतं च योगिनां वरं सञ्जयमित्थम्—

"सञ्जयेमे महीपालाः शूरा युद्धाभिनन्दिनः ।
अन्योन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरिह ॥
पार्थिवाः पृथिवीहेतोः समभित्यज्य जीवितम् ।
न वा शाम्यन्ति निघ्नन्तो वर्धयन्ति यमक्षयम् ॥
भौममैश्वर्यमिच्छन्तो न मृष्यन्ते परस्परम् ।
मन्ये बहुगुणा भूमिस्तन्ममाचक्ष्व सञ्जय ॥
देशानां च परीमाणं नगराणां च सर्वशः ।
श्रोतुमिच्छामि तत्त्वेन यत एते समागताः ॥
दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा ।
प्रभावात्तस्य विप्रर्षेर्व्यासस्याऽमिततेजसः ॥"

इति, सर्वपार्थिवानां च युद्धसमवेतानां विनाशोन्मुखत्वम्, केवल-मैश्वर्यं च प्राकृतं समभिलषतामभावनिष्ठानामधिकारिणां च विष-मचित्तत्वम्, तथा दिव्यैश्वर्यार्थिनां च भावनिष्ठानां तेषां सम-चित्तत्वं च संप्रतिपाद्य, युयुत्सूनां च राज्ञां विषयादिजिज्ञासाद्वारा

हि सर्वजगदुत्पत्तिस्थितिलयकारणस्य सर्वस्वरूपस्य च ब्रह्मणस्तत्त्वाख्यानं स्वस्वार्थदोषाऽज्ञानतमोपहं पप्रच्छ। तथा पृष्टः सञ्जयो राज्ञः प्रश्नाशयं विज्ञाय, यदृच्छया हि स्वस्य सदाचार्यप्रसादसमुपलब्धं महच्च योगैश्वर्यमतिमात्रप्रीत्या स्वकार्तज्ञेन चेत्थम्—

"नमस्कृत्वा प्रवक्ष्यामि पाराशर्याय धीमते ।
यस्य प्रसादाद्दिव्यं तत्प्राप्तं ज्ञानमनुत्तमम् ॥
दृष्टिश्चातीन्द्रिया राजन्दूराच्छ्रवणमेव च ।
परचित्तस्य विज्ञानमतीतानागतस्य च ॥
व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः शुभा ।
अस्त्रैरसङ्गो युद्धेषु वरदानान्महात्मनः ॥"

इति, संश्लाघयन्, "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च" इत्यादि भगवद्भिवर्णितां च ब्रह्मणस्तनुमपरां देवमनुष्यादिनानारूपां तस्मै च राज्ञे विवक्षुः, प्रथमम्—

"यथाप्रज्ञं महाप्राज्ञ भौमान्वक्ष्यामि ते गुणान् ।
शास्त्रचक्षुरवेक्षस्व नमस्ते पुरुषर्षभ ॥"

इति, वयोवृद्धस्वस्वामिप्रणामपूर्वकं, चिन्त्यानां प्राकृतानां च भावानां स्वरूपं यथाक्रममित्थमाह—

"पञ्चैतानि महाराज महाभूतानि संग्रहात् ।
जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः ॥

भूमिरापस्तथा वायुरग्निराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः ॥
भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनम् ॥
यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम् ।
तत्रापि गृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥"

इति । एवं भूम्यादिमहाभूतानां पञ्चानां स्वरूपम्, तत्र च भूमेर्मुख्यत्वं च यथावदभिधाय, ततश्चैवम्—

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः ॥
चत्वारोऽप्सु गुणा राजन्गन्धस्तत्र न विद्यते ।
शब्दः स्पर्शश्च रूपं च तेजसोऽत्र गुणास्त्रयः ॥
शब्दः स्पर्शश्च वायौ द्वौ आकाशे शब्द एव तु ।
एते पञ्च गुणा राजन्महाभूतेषु पञ्चसु ॥
वर्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः ।
अन्योन्यं नाभिवर्तन्ते साम्यं भवति वै यदा ॥
यदा तु विषमीभावमाविशन्ति परस्परम् ।
तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥
आनुपूर्व्याद्विनश्यन्ति जायन्ते चानुपूर्वशः ।
सर्वाण्यपरिमेयानि तदेषां रूपमैश्वरम् ॥"

इति, भूम्यादिपञ्चभूतसमवेतान्गुणान्, तत्साम्यवैषम्यस्थितिम्, तत्कार्यम्, सर्वेषां ब्रह्मस्वभावसिद्धत्वं च यथावन्निरूप्य; ततश्च—

द्विविधानीह भूतानि चराणि स्थावराणि च ।
त्रसानां त्रिविधा योनिरण्डस्वेदजरायुजाः ॥
त्रसानां खलु सर्वेषां श्रेष्ठा राजन्जरायुजाः ।
जरायुजानां प्रवरा मानवाः पशवश्च ये ॥
नानारूपधरा राजंस्तेषां भेदाश्चतुर्दश ।
वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः ॥
ग्राम्याणां पुरुषा श्रेष्ठाः सिंहाश्चारण्यवासिनाम् ।
सर्वेषामेव भूतानामन्योन्येनोपजीवनम् ॥
उद्भिजाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः ।
वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः ॥
तेषां विंशतिरेकोना महाभूतेषु पञ्चसु ।
चतुर्विंशतिरुद्दिष्टा गायत्री लोकसम्मता ॥
य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम् ।
तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति ॥"

इति, भूतानां स्थावरजङ्गमाख्यं च द्वैविध्यम्, पुनश्च जङ्गमानामण्डस्वेदजरायुजभेदेन त्रैविध्यम्, तद्भेदाः, चतुर्विंशत्स्वरूपाणां च सर्वेषां प्राणिनां चतुर्विंशत्तत्त्वात्मकगायत्रीस्वरूपत्वम्, तत्त्वेन तद्विज्ञानस्य सर्वशोकनिवर्तकत्वं च निरूप्य, ततश्च—

"अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यमलक्षणम् ॥"

इत्यन्ततश्च, ब्रह्मणः परस्य स्वभावं व्याचख्यौ। अत्रेदमवधेयम्— "गायत्री वा इदं सर्वम्" इत्यादिश्रुतिभ्यो भावाऽभावात्मकस्य च ब्रह्मणो जगद्रूपस्य गायत्रीपदवाच्यत्वं विज्ञायते । ननु कथं गायत्रीपदवाच्यत्वं ब्रह्मणः संभवति, उच्यते—शक्त्यैव हि ब्रह्म स्वरूपस्वभावयुक्तं समुपास्यं च भवति, ततो जगद्रूपस्य ब्रह्मणः शक्तिर्हि गायत्री, तत एव तदुपचाराद्ब्रह्म गायत्रीपदवाच्यमिति हि युक्तम् । किञ्च सर्वब्रह्माण्डनायकस्य जगज्जन्मादिकर्तुः परमात्मनो ब्रह्मविष्णुमहेश्वराख्यस्य च शक्तिर्हि या महेश्वरी देवी, सापि गायत्री भवति । गायत्री च सा ज्ञानपरा इच्छापरा क्रियापरा योगपरा चेति भेदचतुष्टयवती भवति। तत्तद्वस्तुस्वरूपं हि तन्नियतशक्त्यैव हि विराजते । अतो ब्रह्मणः कमलासनस्य परमात्मनः शक्तिर्हि सरस्वतीति, विष्णोश्च सा हि महालक्ष्मीति, महेश्वरस्य तस्य सा ह्युमेति विज्ञायते । एवं लोकाधिकारिणां च सूर्यचन्द्रादीनां शक्तिश्च गायत्री भवति । एवमेव हि तादृशानामीशेशितव्यरूपाणां चान्येषामधिकारिणां शक्तिश्चापि गायत्री सावित्रीति चोच्यते । तथा च यश्च पुनरात्माऽनाऽऽत्मस्वरूपे हि जगति करैः सहस्रैश्च विष्णुः सूत्रात्मा च परमः पुरुषः, तस्यैषा हि गायत्री महीयसी देवी शक्तिरित्यभ्युपगम्यते। एवं स्वशक्त्यैव हि तया ब्रह्म चैकाऽनेकरूपं च तत्पराऽपरविद्याभ्यां समभिष्टुतं भवति। तस्मादेवमुक्तानां

तदन्येषां च लोकाधिकारिणां सर्वेषां सहधर्मचरी गायत्र्यभिधेया च या शक्तिः, तस्या ह्यावेशस्य योग्यः परमाणुश्च प्रत्येकं प्रकृतिमण्डलेषु च देवतिर्यङ्मनुष्यादिरूपेषु भवति। तच्छक्तिस्वीकारेणैव हि सर्वेऽपि सर्वं स्थानं च समाश्रयन्ते। तच्छक्तिपरमाणुसंयोगश्च स्वस्वरूपानुरूपया च तद्गायत्र्युपासनया भवति, इति शुद्धसिद्धान्तश्च सङ्गच्छते। इदमेव भवत्यार्षं दर्शनम्—यद्धि पुनः सर्वेषु च पदार्थेष्वन्तर्यामिस्वरूपं सर्वोपास्यं च ब्रह्म, तस्यैव शक्तिः प्रकृतिपरा गायत्रीत्यभिधीयते। या च पुनः शुद्धस्य ब्रह्मणः शक्तिः, सा परा योगदेवीति चोच्यते। यथासंसारं च गायत्र्या मायेति व्यवहारश्चाऽपि भवतीति। ततश्चाब्रह्म पिपीलिकान्तं सर्वमपि प्राणिजातं ब्रह्मैवेति हि निष्कृष्टश्च सिद्धान्तः। एवं हि "यच्च पुनः सर्वत्र व्यवस्थितं ब्रह्म, तस्य स्वान्यपराभ्यां च दृष्टिभ्यां द्वौ व्यवसायौ च भवतः सनातनौ। तत्र प्रथमो ह्येकरूपः, अपरश्च नानारूपः। तादृशस्यापि ब्रह्मणो व्यवसायस्य साधनं शक्तिश्च भवत्येव विजातीया। तत्तत्संसारव्यवसायनायिका च शक्तिर्गायत्रीत्यभिधीयते। ततश्च सर्वे चैव प्राणिनो गायत्र्यभिधेया भवन्तीति सिद्धान्तः। अतो गायत्रीस्वरूपं हि ब्रह्म जगद्रूपं विराजते। उपासका हि गायत्र्याः सर्वं जगदभ्युदयं संप्रार्थयन्ते। गायत्री बोधिता भावाश्चिन्त्यास्तर्कोऽवधेयाश्च भवन्ति। अतो नानारूपाः सर्वाश्च ब्रह्मशक्तयः सर्वत्र प्रकृतिपरा हि विराजन्ते" इत्यादिश्रुतिः। यद्धि परं वस्तु प्रकृतेः परम्, तच्च

“तदचिन्त्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रमपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्” इत्यादिश्रुतेरविज्ञेयं भवति। तच्च हि समष्टि-परया च परया विद्यया संस्तूयत इति विज्ञायते। अत एव हि—

“संसारिणश्च सर्वेऽपि व्यवसायपरा जनाः।
गायत्रीं समुपास्यैव मन्त्ररूपां यथाविधि॥
लोकाधिकारिपुरुषशक्तिं गृह्णन्ति तैजसीम्।
सा ब्रह्मविद्या गायत्री नानारूपा विभाव्यते॥
ब्राह्मीशानी वैष्णवीति मायेति च निगद्यते।
तस्मादनन्ता गायत्र्यो भवन्तीति हि बुध्यते॥
गायत्री ब्रह्मशक्तिः स्यादित्यपि श्रुतिचोदितम्।
तस्मात्सर्वात्मशक्तिश्च गायत्रीति निगद्यते॥
तयैव सर्वसंसारव्यवसायश्च जायते।
तस्माच्च प्राणिनः सर्वे गायत्रीसंज्ञयोदिताः॥
योगविद्येति गायत्री योगिभिः परिकथ्यते।
यया हि शक्त्या चात्मानं बोधयन्ति विपश्चितः॥
संसारेऽस्मिंश्च महति नानास्थानक्रमाहिते।
उपक्रमोपसंहारपरा ये ह्यधिकारिणः॥
यया क्षराऽक्षरौ चैव ताभ्यां भिन्नं सनातनम्।
परं च पुरुषं बुध्या जानन्ति च विचारतः॥
सा च विद्यापि गायत्री तत्त्वसंख्यानतत्परा।
सांख्ययोगिभिरध्येया चेत्युक्तं गणयोगिभिः॥

सा स्यादेकपदी चेति द्विपदी त्रिपदी तथा ।
चतुष्पदीति सैवोक्ता ह्यपदेति च सोच्यते ॥
यच्च संरक्षकं ज्ञानं तत्तत्त्वज्ञानमुच्यते ।
विद्यया हि यया तत्त्वविज्ञानं चाभिजायते ॥
सा स्याद्विद्यापि गायत्री तत्त्वविद्येति चोच्यते ।
इयं भवेच्च विद्यानामुत्तमा चेति निर्णयः ॥"

इति, सनातनधर्मदीपिकायामुक्तम् । तस्मात्संसारमण्डलं च सर्वं स्थूलं सूक्ष्मं च गायत्र्यभिधेयमस्तीति शुद्धार्यसिद्धान्तः ।

अथैवमुक्त्वा सञ्जयः पुनरपि तस्मै च राज्ञे यथाप्रश्नं सद्वीपनदीकुलशैलनगरं जगत्स्वरूपं च ब्रह्मणः स्थूलरूपं गायत्रीशब्दवाच्यं यथावच्च व्याख्याय, अन्ततश्चेत्थम्—

"इत्येतत्ते महाराज पृच्छतः शास्त्रचक्षुषा ।
सर्वमुक्तं यथातत्त्वं तस्माच्छममवाप्नुहि ॥
यथोद्दिष्टं मया प्रोक्तं सनिर्वाणमिदं जगत् ।
तस्मादाश्वस कौरव्य पुत्रं दुर्योधनं प्रति ॥"

इति, तदुक्तानां च सर्वेषां जगतां सुखदुःखात्मकत्वेन, यच्च वा हि सर्वसुखदुःखोपरमात्मकं निरतिशयानन्दयुक्तं परमपुरुषार्थं कैवल्यं परप्राप्तिरूपं च ब्रह्मनिर्वाणम्, तदेव भवता प्राप्यमित्युक्त्वा, तथा कालपरतन्त्वान् दुर्योधनादीन्प्रति च न किमपि चिन्तनीयमस्तीत्याह ।

अथ च राजा महार्थं शान्तिप्रदं सत्यं चाऽतिगंभीरं सञ्जयवाक्यं हि सगौरवं तत्त्वतो विज्ञाय, निश्चितार्थः पुनरपि कालानुगुणं च स्वकर्तव्यं सानुनयं चेत्थम्—

"असंशयं सूतपुत्र कालः संक्षिपते जगत् ।
सृजते च पुनर्लोकान्नेह विद्यति शाश्वतम् ॥
नरो नारायणश्चैव सर्वज्ञः सर्वभूतहृत् ।
स एव शास्ता लोकस्य साधूनां च परायणम् ॥
यमेव योगिनः सर्वे कृष्ण इत्यामनन्ति हि ।
देवा वैकुण्ठ इत्याहुर्वेदा विष्णुरिति स्वयम् ॥
तस्याऽधीनं जगत्सर्वं यच्चास्ति सचराचरम् ।
ध्येयः स एव भगवानस्ति देवः सनातनः ॥"

इति, व्याजहार । इत्थं पुनरत्र राज्ञश्चाशयो विज्ञायते—भोः सञ्जय? शश्वच्च विजातीयस्वभावेन बहुधा विराजमानमिदं जगच्च कालपुरुषस्वभावेन संक्षिप्तमन्यथाकृतं च भविष्यति । अस्त्येवं हि कालानुरूपो भगवदवतारश्च लोकाधिकारपरः । स एव भगवान्नरनारायणो देवः सत्यसङ्कल्पः साधुसंरक्षणपरः सद्धर्म-प्रवर्तकश्च भवत्यवतीर्णः। स एव भगवान्धर्मपक्षपाती सर्वधर्मसेव्यश्च श्रीकृष्णाभिधानो भवति । तदधीनं खल्वस्ति सर्वं च जगत्तन्त्रम् । स एवाऽस्माभिः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च भवति । किमन्यथा परिचिन्तनेन इति । किंचात्र हि 'ध्येयः स एव भगवान्, इत्यनेन तस्यैव भगवतो दिव्यज्ञानोपदेशाधिकारश्च

भवतीति राज्ञा, निश्चितमिति विज्ञायते । तथा तद्भगवदवतार-प्रयोजनं चाऽपि'—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति, भगवतैवाऽभिवर्णितं विज्ञायते । तस्माद्यथाकालं हि धर्म-संरक्षणार्थमवतीर्णस्य भगवतो नरनारायणस्य—यश्च, दिव्योपदेश-स्तत्तत्संसारव्यवसायपराधिकारिवेद्यश्च, तस्यैव जिज्ञासा राज्ञः संबभूवेति विज्ञेयम् । तदुक्तं भगवता गोभिलेन—

"पर्वण्यस्मिन्द्वितीये हि चैकाध्यायेन कीर्तिता ।
भगवद्धर्मजिज्ञासा राज्ञोऽस्य हि महर्षिणा ॥" इति ।

अथ च भगवान्गावल्गणिः सञ्जयः, सन्निधे च राज्ञस्तिष्ठन्नपि, स्वसदाचार्यप्रसादसमुपलब्धयोगबलेन च प्रणिधानेन प्रविश्य कुरुक्षेत्रं च भारतयुद्धस्थानम्, सर्वस्य प्रत्यक्षदर्शी भूतभव्यभवि-ष्यविच्च सर्वां च प्रवृत्तिं परिभाव्य, प्रणिधानान्निवृत्तश्च, स्वार्थ-दोषाऽऽविष्टं तद्दोषनिवृत्तये च तं सङ्कल्पनायकं परं पुरुषं च वासु-देवं यथाबलं ध्यायन्तं च राजानमुद्बोध्य, सशोकमित्थम्—

"सञ्जयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो भीष्मः शान्तनवो भरतानां पितामहः ॥"

इति, स्वनामनिर्देशपूर्वकं च तं प्रणम्य, भीष्मवधं च तस्मै संग्र-हेणोक्त्वा, पुनश्च—

"ककुदं सर्वयोधानां धाम सर्वधनुष्मताम् ।
यं वदन्ति महात्मानः सर्वधर्मविशारदाः ॥
शरतल्पगतः सोऽद्य शेते कुरुपितामहः ।
सत्यधर्मपरः शान्तः प्राप्तकालं व्यवस्य हि ॥
यः सर्वान्पृथिवीपालान्समवेतान्महामृधे ।
जिगायैकरथेनैव काशीपुर्यां महारथः ॥
जामदग्न्यं रणे रामं योऽयुध्यदपसंभ्रमः ।
न हतो जामदग्न्येन स हतोऽत्र शिखण्डिना ॥
सत्यगामी च धीरश्च भरतानां पितामहः ।
सर्वेश्वरस्य सङ्कल्पं धर्मतत्त्वं यथामति ॥
दायादेभ्यश्च सर्वेभ्यस्तत्र कार्यं च धर्मवित् ।
यथाकालं निवेद्यैव निहतः सत्यगामिभिः ॥
सोऽयं दैवप्रेरितेभ्यो हंसेभ्यो योगमुत्तमम् ।
संप्राप्य हि विशुद्धेन चेतसाऽनन्यगामिना ॥
ध्यायन्नारायणं देवं सत्यसङ्कल्पनायकम् ।
परित्राणाय साधूनामवतीर्णं यदोः कुले ॥
सर्वधर्मान्परित्यज्य बाह्यांश्चात्मपरायणः ।
मुक्तश्च सर्वपापेभ्यस्त्यागसन्याससेवया ॥
महोपनिषदं चैव योगमास्थाय वीर्यवान् ।
जपञ्शान्तनवो धीमान्कालकांक्षी स्थितोऽभवत् ॥"

इत्यादिभिः, तद्भीष्मस्य महिमां सत्यधर्माश्रयित्वं मुमुक्षुत्वं सत्प्रवृत्तिं च व्याजहार।

अथ च राजा धृतराष्ट्रः सञ्जयमुखादेवमतिदारुणं स्वसुतानां भविष्यद्दुर्गतिलक्षणं च भीष्मवधं निशम्य, संक्षुब्धहृदयो धर्मासक्तमानसस्तादृशमहनीयवधे ह्यत्याहितमाशङ्कमानश्च, तं सञ्जयं च भगवन्तम्—

"कथं कुरूणामृषभो हतो भीष्मः शिखण्डिना।
कथं रथात्सन्यपतत्पिता मे वासवोपमः॥
यस्मिन्सत्यं च मेधा च नीतिश्च भरतर्षभे।
अप्रमेयानि दुर्धर्षे कथं स निहतो युधि॥
यः पुरा विबुधैः सर्वैः सहाये युद्धदुर्मदः।
कांक्षितो दानवान्घ्नद्भिः पिता मम महाव्रतः॥
यस्मिञ्जाते महावीर्ये शन्तनुर्लोकविश्रुतः।
शोकं दैन्यं च दुःखं च प्रजहात्स च तत्क्षणे॥
प्रोक्तं परायणं प्राज्ञं स्वधर्मनिरतं शुचिम्।
वेदवेदाङ्गतत्त्वज्ञं कथं शंससि मे हतम्॥
कालो नूनं महावीर्यः सर्वलोकदुरत्ययः।
यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय॥"

इत्यादिभिः, कालान्तरसिद्धस्य धर्मस्य तद्धर्मनिष्ठानामधिकारिणां च कालान्तरे विनाशः, धर्मज्ञैश्च तद्धर्मविनाशाभिनन्दनम्, कालरूपभगवत्सङ्कल्पविज्ञानिनां चाधिकारिणां विना हि तत्सङ्कल्पाऽनु

गुणप्रवृत्तिं स्वधर्ममूलानामखिलानां च विभवानां परित्यागः, तदनुगुणं धर्मानुशासनं चेत्येतत्सर्वं हि कालपुरुषभगवदधीनमिति वदन्, यथोक्तभीष्ममहिमानं चानुस्मरन्पुनश्चैवम्—

"धर्मादधर्मो बलवान्संप्राप्त इति मे मतिः ।
यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥
दारुणः क्षत्रधर्मोऽयमृषिभिः संप्रदर्शितः ।
यत्र शान्तनवं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥
वयं वा राज्यमिच्छामो घातयित्वा महाव्रतम् ।
क्षत्रधर्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः ॥"

इति, तत्तत्कालाधीनं च क्षात्रमुत्तमं धर्ममपि महनीयवधप्रवृत्त्यनुग्राहकत्वेन लोभमूलत्वेन च विनिन्दन्, पुनरपि—

"सर्वास्त्रविनयोपेतं शान्तं दान्तं मनस्विनम् ।
हतं शान्तनवं श्रुत्वा मन्ये शेषं हतं बलम् ॥
अगाधे सलिले मग्नां नावं दृष्ट्वेव पारगाः ।
भीष्मे हते भृशं दुःखान्मन्ये शोचन्ति पुत्रकाः ॥
महान्तं भारमुद्यम्य विश्रुतं सार्वलौकिकम् ।
दृष्ट्वापि निहतं भीष्मं मन्ये शोचन्ति पुत्रकाः ॥"

इत्यादिभिश्च, भगवत्सङ्कल्पविरुद्धव्यवसायपराणां स्वपुत्राणां तद्भीष्मवधेन महतीं सन्निहितां च दुर्गतिं निरूपयन्, पुनरपि—

"न हि मे शान्तिरस्तीह श्रुत्वा देवव्रतं हतम् ।
पितरं भीमकर्माणं भीष्ममाहवशोभिनम् ॥

आर्तिं मे हृदये रूढां महतीं पुत्रहानिजाम् ।
त्वं हि मे सर्पिषेवाऽग्निमुद्दीपयसि सञ्जय ॥
अश्मसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ॥"

इति, भीष्मवधश्रवणे स्वस्य दुःखपरकाष्ठाश्रयित्वमाविष्कुर्वन्, तद्भीष्मवधप्रकारजिज्ञासुरित्थम्—

"श्रोष्यामि तानि दुःखानि दुर्योधनकृतान्यहम् ।
तस्मान्मे सर्वमाचक्ष्व यद्वृत्तं तस्य सञ्जय ॥
यद्वृत्तं तत्र संग्रामे मन्दस्याऽबुद्धिसंभवम् ।
अपनीतं सुनीतं यत्तन्ममाचक्ष्व सञ्जय ॥
यत्कृतं तत्र संग्रामे भीष्मेण जयमिच्छता ।
तेजोयुक्तं कृतास्त्रेण शंस तच्चाप्यशेषतः ॥
यथा तदभवद्युद्धं कुरुपाण्डवसेनयोः ।
क्रमेण येन यस्मिंश्च काले यच्च यथाऽभवत् ॥
के वीरास्तममित्रघ्नमन्वयुस्तत्र संसदि ।
शंस मे यद्यथा चासीद्युद्धं भीष्मस्य पाण्डवैः ॥"

इति, भारतयुद्धप्रकारं च यथाकालं यथाक्रमं यथाविधि यथाकर्म च साऽनुनयं पप्रच्छ । अथैवं पृष्टश्च भगवान्सञ्जयस्तस्य राज्ञो वचनं च यथार्थं निशम्य, पुनः सत्यदृष्टिश्चेत्थम्—

"त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।
न तु दुर्योधने दोषमिममासङ्क्तुमर्हसि ॥
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा तेन नान्यं स उपाशङ्कितुमर्हति ॥
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य राज्ञश्चैव विशेषतः ॥
निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूतः सहामात्यैः क्षान्तैश्च शुचिरं वने ॥
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च ॥
शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम् ।
भरतानामभूद्युद्धं यथा तद्रोमहर्षणम् ॥"

इत्यादिभिरेवं वादिनं च तं राजानं सम्मान्य, विना हि दुर्योधनं तदनुयायिनश्च, तस्मिन्नेव राजनि तन्महनीयभीष्मादिवधहेतुत्वं च धर्मतः संस्थाप्य, तथा पाण्डवानां पितृव्यगौरवेण क्षान्त्या च धर्मानुवर्तित्वं च निरूप्य, युद्धप्रकारं विवक्षुः—युद्धारंभकालम्, तत्कालसंभूतानि दुर्निमित्तानि, भीष्मादीनां च महनीयानां पाण्डवाभ्युदयप्रार्थनापरत्वम्, युयुत्सया हि समागतेभ्यो भूपतिभ्यो भीष्मोपदिष्टं च धर्म्यं वचनम्, युद्धात्कर्णनिर्गमनम्, भीष्माधिष्ठितकुरुसेनानिर्गमनप्रकारम्, तत्सेनास्वरूपं चेत्यादि सर्वं यथावच्च व्याचख्यौ । अथ पुनश्च—

"केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय ।
उदग्रमनसः के वा के वा दीना विचेतसः ॥
के पूर्वं प्रहरंस्तत्र युद्धे हृदयकंपने ।
मामकाः पाण्डवेया वा तन्ममाचक्ष्व सञ्जय ॥
कस्य सेनासमुदये जायते शुभलक्षणम् ।
तथा मनः प्रसादश्च सर्वमाचक्ष्व सञ्जय ॥"

इति, सेनयोरुभयोश्च युद्धनिर्वाहकाविकारिपुरुषस्वरूपजिज्ञासुना हि राज्ञाऽभिपृष्टश्च भगवान्सञ्जयः, तस्मै च राज्ञे—

"तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः ।
दुर्योधनो महाराज दुःशासनमथाब्रवीत् ॥"

इत्यादिभिर्दुर्योधनादीनामधर्मेण प्राकृतशक्त्याश्रयित्वम्—

"न तथा बलवीर्याभ्यां जयन्ति विजगीषवः ।
यथा सत्याऽनृशंसाभ्यां धर्मेणैवोद्यमेन च ॥
त्यक्त्वाऽधर्मं तथा सर्वे धर्मं चोत्तममास्थिताः ।
युध्यध्वमनहंकारा यतो धर्मस्ततो जयः ॥
अनन्तजेता गोविन्दः शत्रुपूगेषु नित्यशः ।
पुरुषः सनातनमयो यतःकृष्णस्ततो जयः ॥"

इत्यादिभिः, पांडवानां तदनुयायिनां धर्माश्रयित्वेनाऽऽत्मशक्त्या च परमपुरुषपरायणत्वम्, तावता पाण्डवानामेव च विजय इत्याह । अथ पुनश्च राजा स्वपुत्राणां प्राकृतशक्तिपरायणत्वं पाण्डवानां

भगवत्परायणत्वं च सञ्जयमुखादाकर्ण्याऽपि, प्राकृतात्मीयबलस्वरूपजिज्ञासुरित्थम्——

"अक्षौहिणीं दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः ।
कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः ॥
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत सञ्जय ॥"

इति, सञ्जयं च तद्बलतत्त्वं पप्रच्छ । ततश्चैवं पृष्टः सञ्जयः प्रथमं तदुभयोः सेनयोः स्वरूपं निरूप्य, अक्षौहिणीसप्तकस्यापि धर्मराजस्य भीष्मादीनां च महनीयानामनुनयेन विजयहेतुविशेषबलवत्त्वं च व्याजहार । तदुक्तम्——

"गौरवं पाण्डुपुत्राणां मान्यान्मानयतां च तान् ।
दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् ॥
सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम् ।
दयां च ज्ञातिषु परां कथयांचक्रिरे नृपाः ॥
साधुसाध्विति सर्वत्र विचेरुः स्तुतिसंहिताः ।
वाचः पुण्याः कीर्तिमतां मनोहृदयकर्षणाः ॥"

इति । अत्र पाण्डवानां महिमा च सर्वैः श्लाघितो भवतीति विज्ञायते । सोऽयं हि किल पाण्डवानां सत्यप्यल्पेऽपि सैन्ये महिमा चेत्थमवगम्यते-यस्मिंश्च भवत्यात्मशक्तिपौष्कल्यं प्रगल्भकूटाधिकारिसिद्धं परदेवभावनियतं च, स एव महान्भवति । प्रगल्भकूटाधिकारिणस्तु, दिव्याकाशाणुपरिबद्धेन तदमानित्वादिधर्मवता च

स्वात्मस्वरूपेण ह्यनुकूलभावनासंस्कृतया स्वात्मशक्तियुक्तया च मनःशक्त्या द्विषतः परानपि स्ववशं नयन्तीति, सनातनधर्म-दीपिकायां व्याख्याता भवन्ति। एवं विधश्चैवाधिकारी महानु-भावो भवति। अत एव पाण्डवानां महात्मनां गौरवं चाभिवर्णितं भवति। अत एव च शास्त्रेषु "महात्मनां नैव शत्रवः, नाऽपि च मित्राः" इत्याद्यभिवर्णितमस्ति। अनेन—साधवश्च प्रारब्ध-कार्यनिर्वाहका भवन्तीति सिद्धं विज्ञायते, येषां च सर्वमावश्यकम्, येषु च परा अपि स्वजीवितं परित्यजन्ति। वेद्यो भवत्यत्र शास्त्रेषु भवति सहस्रशश्चेतिहासः, इति। किं चाध्यायेऽस्मिंश्च पञ्चमे धर्मसूनोस्तथान्येषां च स्वभावं विशेपदृष्ट्या हि परामृशतां भवति महार्थोदयः। अथ च राजा धृतराष्ट्रो विदितवेद्यश्च—

"सूर्योदये सञ्जय केऽनुपूर्वं
युयुत्सवो हृष्यमाणा इवाऽऽसन्।
मामका वा भीष्मनेत्राः समीपे
पाण्डवा वा भीमनेत्रास्तदानीम्॥
केषां जघन्यौ सोमसूर्यौ सवायू
केषां सेनां श्वापदाश्चाऽऽभषन्त।
केषां यूनां मुखवर्णाः प्रसन्नाः
सर्वं ह्येतद्ब्रूहि तत्त्वं यथावत्॥"

इति, युयुत्सूनां साधिपानां च कुरुपाण्डवानां तत्सेनानां च प्रवृत्तिं पप्रच्छ। ततो भगवान्सञ्जयश्च—

"उभे सेने तुल्यमिवोपयाते
उभे व्यूहे हृष्टरूपे नरेन्द्र ।
उभे चित्रे वनराजिप्रकाशे
तथैवोभे नागरथाश्वपूर्णे ॥" इत्यारभ्य,

"पश्चान्मुखाः कौरवो धार्तराष्ट्राः
स्थिताः पार्थाः प्राङ्मुखा योत्स्यमानाः ।
दैत्येन्द्रसेनेव च कौरवाणां
देवेन्द्रसेनेव च पाण्डवानाम् ॥

इत्यन्तश्च प्रबन्धैस्तस्मै च राज्ञे कौरवाणामासुरेण च धर्मेण युद्धस्य प्रवृत्तिम्, पाण्डवानां च दैवधर्मेण हि युद्धस्य प्रवृत्तिं च साङ्गं व्याहृत्य, अन्ततश्च ससंभ्रमं युद्धाय चाऽग्रतः स्थितं ज्ञानिनां योगिनां च सत्यधर्मपराणां प्रवरं च भीष्ममभिवीक्ष्य, तमधिकृत्येत्थम्—

"य एष रोषात्प्रतपन्बलस्थो
यो नः सेनां सिम्ह इवेक्षते च ।
स एष भीष्मः कुरुवंशकेतु-
र्येनाहृतास्त्रिशतं वाजिमेधाः ॥
एतान्यनीकानि महानुभावं
गूहन्ति मेघा इव रश्मिमन्तम् ।
एतानि हत्वा पुरुषप्रवीर
काङ्क्षस्व युद्धं भरतर्षभेण ॥"

इत्यर्जुनायोक्तं श्रीकृष्णवचनं च व्याजहार । अत्र 'साकं हि कुरुसेनाभिः युद्धार्थं समुपागतस्य भीष्मस्य वधश्च भवता कार्यः,' इति भगवन्निर्देशात्तस्य भगवतः श्रीकृष्णाख्यस्य दैवस्वभावपाण्डव-पक्षपातित्वम्, आसुरधर्मावलंबिषु कौरवेषु सञ्जिहीर्षा चास्तीति व्यज्यते । अत्रेदमवधेयम्—एवमस्मिन्भगवद्गीतापर्वणि तृतीये आद्यैश्च त्रिभिरध्यायैः भीष्मवधश्च तन्माहिमाप्रकारवर्णनोपेतः, तुरीयपंचमषष्ठैश्चाऽध्यायैः सेनयोरुभयोश्च युद्धनिर्वाहकाधि-कारिस्वरूपम्, प्राकृतात्मीयबलस्वरूपम्, तत्तद्बलानुरूपप्रवृत्तिं च पृच्छते राज्ञे, क्रमशः सर्वं च तत्स्वरूपं सञ्जयो व्याचख्या-विति तदध्यायत्रयसंग्रहार्थः । द्वितीयपर्वणि च राज्ञः भगवद्धर्म-जिज्ञासा, तृतीये तु पर्वणि वक्ष्यमाणस्य च भगवद्धर्मस्य सङ्गति-श्चाद्यैः षड्भिरध्यायैः प्रादर्शीति । तदुक्तम्—

"अथाऽस्मिंश्च तृतीये हि पर्वणि द्वीपसंभवः ।
या वै भगवतो धर्मं वदन्ती तत्त्वलक्षणा ॥
प्रवृत्ते भारते युद्धे कुरुक्षेत्रे महर्षयः ।
श्रीमता वासुदेवेन कृष्णेन च महात्मना ॥
स्वार्थावेशेन मूढाय पुनस्तस्य निवृत्तये ।
आत्मानं संप्रपन्नाय पार्थाय स्वांशमूर्तये ॥
उपदिष्टाऽस्ति विद्या सा गीताख्या ब्रह्मसंमिता ।
अध्यायानां षड्विंशत्या गुंभिता लोकशर्मदा ॥

तां वै भगवतीं सर्वैरधिकारिभिरन्वहम् ।
व्यवसायपरैश्चैव वेद्यां योगावगाहिनीम् ।
सत्यधर्मपरां चैव विशेषार्थप्रदायिनीम् ।
वक्तुं हि सङ्गतिं तस्या ह्यध्यायान्षड् जगाद च ॥
इत्थं तदर्थो विज्ञेयः शुद्धविद्याधिकारिभिः ।
अथगावल्गणिर्विद्वान्वधं भीष्मस्य योगिनः ॥
यथातत्त्वं यथाकर्म प्राह राज्ञे यथामति ।
श्रुत्वा वधं तु भीष्मस्य धृतराष्ट्रोऽम्बिकासुतः ॥
महिमानं च तं स्मृत्वा स्वपुत्राणां विशेषतः ।
पृच्छन्नविनयं चाथ पाण्डवानां च तद्बलम् ॥
अविश्रान्तहृदयत्वं स्वस्य भीष्मवधाद्वदन् ।
तन्महद्युद्धसंस्थानं पप्रच्छ विनयान्वितः ॥
तथा पृष्टः सञ्जयश्च युद्धारंभं यथाक्रमम् ।
यथाविधि च सर्वं हि राज्ञस्तस्यैव धर्मतः ॥
सर्वानर्थकारणत्वं वर्णयन्नाह योगिराट् ।
भीष्मस्याऽनुत्तमां निष्ठां सत्यन्ते च तथाऽवदत् ॥
अथ राज्ञा विशेषेण प्रश्नाश्चैव कृतास्त्रयः ।
इत्थं तत्प्रश्नतात्पर्यं वर्ण्यते पूर्वसूरिभिः ॥
सर्वेष्वपि च कार्येषु ह्यधिकारस्य लक्षणम् ।
देवाऽसुरस्वभावस्य प्रथमप्रश्नगोचरम् ॥

द्वितीयस्य तु दैवस्य स्वभावस्य च लक्षणम्।
प्रश्नस्य गोचरं प्रोक्तं प्रबलः स च कर्मसु ॥
तत्तत्स्वभावानुरूपा प्रवृत्तिर्या च विद्यते।
तस्यास्तु लक्षणं चैव तृतीयप्रश्नगोचरम् ॥
राज्ञश्च तत्त्वजिज्ञासोस्तस्य वै मुनिपुङ्गवाः।
यथाप्रश्नं सञ्जयेन सर्वं प्रोक्तं यथामति ॥
इत्येवं सञ्जयादस्मात्प्रवृत्तिं च स्वभावयोः।
तां वै धर्माऽधर्मपराभधिगम्य विचार्य हि ॥
प्रवृत्तिं तां भगवतः शुद्धां योगावगाहिनीम्।
स धर्मक्षेत्र इति तं पप्रच्छ ब्रह्मभावनः ॥
अथाऽसौ सञ्जयो योगी राज्ञे तस्मै सदुत्तरम्।
यथाप्रश्नं हि संसिद्धमपश्यन्किमपि स्वतः ॥
स्वसदार्यकृपालब्धदिव्यविज्ञानचक्षुषा।
यथाऽयं धृतराष्ट्रश्च स्वार्थावेशेन शोचति ॥
तथा यथाधिकारं हि स्वार्थावेशेन शोचते।
पार्थाय या चोपदिष्टा वासुदेवेन योगिना ॥
तां वै विज्ञाय सिद्धार्थस्तस्मै राज्ञे यथाक्रमम्।
तामेव भगवद्गीतां सर्वधर्मसमुच्चयाम् ॥
**प्रीत्या ह्युपदिदेशेति गीतावतारसङ्गतिः।**
**विज्ञेया योगिभिः शुद्धैरियं गीतार्थबोद्धृभिः ॥**

एवं गीतोपदेशार्थं सञ्जयाय महामुनिः ।
दिव्यं चक्षुर्ददौ चेति भारतादवगम्यते ॥"

इति, भगवता गोभिलेन। अथैवमुक्तः सञ्जयेन राजा धृतराष्ट्रः स्वार्थदोषेण हि स्वनियतव्यवसायं च 'सोऽयमित्थमस्ति, इत्यजानन्पुनरपि तदुक्तं प्रवृत्तिनिवृत्तिभिन्नं सर्वैरपि संसारव्यवसायपरैरावश्यकत्वेन विज्ञेयं भगवत्सङ्कल्पसिद्धं सर्वधर्मसमुच्चयात्मकं योगब्रह्मविद्यावधेयं शुद्धं सनातनं च धर्मं तं सञ्जयं च सन्निहितं पप्रच्छ "धर्मक्षेत्रे कुरुक्षेत्रे" इत्यादिना प्रथमश्लोकेन। तथा पृष्टः सञ्जयश्च यथाप्रश्नं हि तस्मै च राज्ञे धर्मान्तरं हि वक्तुं किमप्यपश्यन्, यथा चायं राजा स्वार्थावेशेन ह्यनीशया च संक्षुब्धचित्तः पदे पदेऽनुशोचति, तथा स्वार्जुनत्वलोकप्रतिनिधित्वस्वरूपानुरूपया च लोकभावनया परिमूढचेतसे च पार्थाय, या हि पुनः सर्वसंसारव्यवसायशिक्षकधुरीणेन च भगवता श्रीकृष्णेन समुपदिष्टा योगब्रह्मविद्या, तामेव हि भगवद्गीतामध्यायानां च षड्विंशत्या विभूषितां स्वयोगबलेन समधिगम्य, तदेनामेव हि तस्मै च राज्ञे समुपदिदिक्षुः, तां चैवम् "धार्तराष्ट्रबलं दृष्ट्वा" इत्यारभ्य "यत्र योगीश्वरः कृष्णो" इत्यन्तैश्च प्रबन्धैः कथयामास, इत्येवं हि गीतावतारसङ्गतिश्च मध्येमहाभारतं सनातनधर्मरहस्यार्थजिज्ञासुभिरधिकारिभिश्च मुमुक्षुभिः सविमर्शं भवति विज्ञेया ।

ननु कथं पुनरत्र राज्ञो धृतराष्ट्रस्य तथाऽर्जुनस्य च स्वार्थावेशदोषश्चाऽवगम्यत इति चेदुच्यते—पृथक्त्वविज्ञानमूल-धर्मानुकूलव्यवसायप्रवर्तकश्च स भवति, इति। अत एवाऽयं दोषश्च "नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन" "न जायते म्रीयते वा कदाचित्" इत्यादिश्रुत्यनु-शिक्षिताऽऽत्मविज्ञानपूर्वकं च स्वरूपानुरूपं धर्ममनुतिष्ठतो ह्यधि-कारिणश्चाऽपि प्रवर्तयति प्रारब्धप्राकृतधर्मानुकूलप्रयोजने च प्रवृत्तिपरे व्यवसाये। तथा प्रवृत्ताश्चात्मविज्ञानिनोऽपि प्राकृत-धर्मानुकूलप्रयोजनदृष्ट्या ह्यनुशोचन्ति, तथा गोत्रसूत्रादिना स्वात्मानं व्यवहरन्ति, स्वोद्दिष्टपुरुषार्थप्राप्त्या च मोदन्ते। एवम्—'ब्राह्मणोऽहम्, अन्यश्चाऽयम्, इयं च स्त्री, इदं च तत्, इत्यादिप्राकृतपृथक्त्वविज्ञानमूलधर्मानुकूलप्रयोजनं वैदिक-मवैदिकं च निरीश्वरं कर्म यथाबलं कुर्वतो ह्यधिकारिणश्चा-ऽपि प्रवर्तयत्ययं दोषश्च, तददृष्टात्मविज्ञानमूलव्यवसाये च निवृत्तिपरे। तथा प्रवृत्ताः कर्मठाश्चाऽपि "अहो बत महत्पापं कर्तुं व्यवसिता वयम्" इत्यनुशोचन्ति। स्वप्राकृतधर्मानुरूपाणां च कर्मणां नियतत्वेऽपि तानि तितिक्षन्ते, वृथा हि 'वर्णाश्रमी, धर्मवानहम्, इति च मोदन्ते। परमार्थतस्तु—भवन्ति प्रवृत्ति-धर्माः प्राकृता वर्णाश्रमपराः, निवृत्तिधर्मास्त्वात्मीयाः प्राकृत-धर्मपरित्यागपराः, इति हि विज्ञायन्ते। धर्मयोरनयोः प्राधान्यं च स्वार्थदोषविरहेणैव भवतीति हि सिद्धान्तः। इमौ धर्मावु-

भावपि ब्रह्मस्वभावसिद्धाविति महनीयैश्च शुद्धार्यवाक्यैर्विज्ञायेते । अनयोरुभयोर्धर्मयोश्च तत्स्वार्थविशदोषविरहश्च योगब्रह्मविद्यासमधिगम्येन शुद्धधर्मसमाश्रयणेन भवति । अत एव च तदुभाभ्यां च धर्माभ्यामन्यः सनातनो योगधर्मश्च तद्ब्रह्मस्वभावसिद्ध इति विज्ञायते । तदुक्तं योगरहस्ये—

"आत्मानं प्रकृतिं चैव ब्रह्म चैव सनातनम् ।
अधिकृत्य च धर्मान्वै दर्शनानि वदन्ति च ॥
धर्मः प्रवृत्तिरूपश्च प्राकृतश्चेति कथ्यते ।
निवृत्तिधर्मस्त्वात्मीयस्ताभ्यां भिन्नः सनातनः ॥
योगधर्मश्च सर्वेऽपि चैते ब्रह्मपरा मताः ।
प्राकृतात्मीयधर्मौ द्वौ कार्यकारणरूपिणौ ॥
योगधर्मेण संसिद्धौ स्वार्थदोषविवर्जितौ ।
भवेतामत एवायं योगः सेव्योऽस्ति मानुषैः ॥"

इति । तत एव हि विना च योगधर्मेण तदात्मधर्मं तदनात्मसंसारधर्मं च नियतं हि यावदावश्यकमनुतिष्ठतां पराऽवराणां चाप्यधिकारिणां सत्यावश्यके ज्ञानसङ्कल्पपूर्वककर्मानुष्ठानसमये, स्वार्थविशदोषोत्पत्तिश्च विज्ञायते । तथा च प्रकृते राजा धृतराष्ट्रश्च "यथा भवान्वेत्ति तथैव वेत्ता भावाऽभावौ विदितौ मे यथार्थौ। स्वार्थे हि संमुह्यति" इत्युक्त्या भावाऽभावनिष्ठोऽपि तदुक्तस्वार्थविशदोषेणैव भीष्मादीन्प्रत्यनुशोचतीति विज्ञायते । अत्र भावनिष्ठा चात्मपरा निवृत्तिरूपा, अभावनिष्ठा च

प्रकृतिपरा प्रवृत्तिरूपा भवति । अतश्च भगवद्व्याससन्निधौ तथा तद्व्यासादिष्टसञ्जयसन्निधावपि च स्वार्थदोषनिवर्तकं योगगर्भं शुद्धं सनातनं च धर्ममेवाऽयं राजा प्रार्थयते, इति ह्युक्तमस्ति । एवं शुद्धधर्मप्रवर्तकाचार्यभगवन्नारायणसत्यनित्यदिव्यसङ्कल्पफलप्रादुर्भावसमयाभिज्ञस्य भगवदंशभूतस्य, तथा "परित्राणाय साधूनां शुद्धयोगब्रह्मविद्योपदेशार्थं च समवतीर्णो यो भगवान्वासुदेवः, तस्य सहचरस्य चार्जुनस्य स्वलोकप्रतिनिधिस्वरूपानुरूपया च लोकभावनया स्वकर्तव्ये कर्मणि स्वार्थविशदोषो यश्च सञ्जातः, स चाऽग्रे यथाप्रकरणं सम्यगभिवर्णितो भविष्यति ।

---

## (२) अथ श्रीभगवद्गीतास्वरूपम्,
## तस्याः योगब्रह्मविद्यास्वरूपत्वसमर्थनं च ।

---

तदिदं हि श्रीगीताशास्त्रं भगवता पार्थसारथिना च श्रीकृष्णेन समुचिते च समये "शिष्यस्तेऽहम्" इति स्वात्मानमावेद्य शरणागताय चार्जुनाय "अशोच्यानन्वशोचस्त्वम्" इत्यारभ्य "मोक्षयिष्यामि माशुचः" इत्यन्तैश्च षट्सप्तत्युत्तरपञ्चशतैश्च श्लोकैः समुपदिष्टं चतुर्विंशतिगीतात्मकं योगब्रह्मविद्यास्वरूपं सर्वाधिकारिवेद्यं विशेषतः शुद्धाधिकारिसंसेव्यं सर्वगुह्यतमं सर्वजगन्मङ्गलावहं च भवति । तदित्थं पूर्वाचार्यो भगवान्नारदः—

श्रीहंसयोगिविरचितः

## नारदकारिकाः

---

नरनारायणौ देवौ शुद्धविद्याप्रवर्तकौ ।
पार्थकृष्णस्वरूपौ तौ प्रपद्ये लोकनायकौ ॥ १ ॥

प्रारब्धे भारते युद्धे तत्कृष्णार्जुनयोरपि ।
व्यवसाये यथाकालं शुद्धे परिणते सति ॥ २ ॥

नरोत्तमाय पार्थाय भगवान्योगिनां वरः ।
स्वकार्यकारिणे तस्मै गीताशास्त्रं ह्युपादिशत् ॥ ३ ॥

गीताशास्त्रे हि सर्वेषामधिकारः प्रकीर्तितः ।
कर्म चावश्यकं यद्धि कर्तव्यं व्यवसायिभिः ॥ ४ ॥

गीताशास्त्रे यथारूपं गायत्र्यर्थनिरूपके ।
ज्ञानसङ्कल्पपूर्वं हि कथ्यते कृष्णयोगिना ॥ ५ ॥

तथा तेषां फलं चाऽपि योगरूपं सुशुद्धिदम् ।
समाहारस्वरूपं च योगिभिर्यच्च कथ्यते ॥ ६ ॥

तस्माद्गीता भगवती गायत्रीत्यवधार्यताम् ।
गायत्री कामधेनुः स्यात्स्तनं षट्कचतुष्टयम् ॥ ७ ॥

गीतामृतं महादुग्धं दोग्धा नारायणः स्वयम् ।
पार्थो दुग्धस्य भोक्ताऽस्ति लोकप्रतिनिधिर्नरः ॥ ८ ॥

कर्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च ।
पञ्च बुद्धीन्द्रियार्थाश्च भूतानां चैव पञ्चकम् ॥ ९ ॥

मनो बुद्धिस्तथैवात्मा ह्यव्यक्तं च यदुत्तमम् ।
चतुर्विंशतिरेतानि गायत्र्या ह्यक्षराणि च ॥ १० ॥

प्रणवं पुरुषं प्राहुः पञ्चविंशं तमव्ययम् ।
सर्वगं सर्वरूपं च हृदि सन्निहितं सताम् ॥ ११ ॥

माता हि सर्वविद्यानां गायत्री च चतुष्पदा ।
पितरं प्रणवं प्राहुर्मुनयो धर्मवत्सलाः ॥ १२ ॥

ताभ्यां च स्वस्तये शुद्धधर्मो लोकेभ्य उच्यते ।
चतुर्विंशतिगीताःस्युर्गायत्रीवदनानि च ॥ १३ ॥

षट्सप्तत्युत्तरं पञ्चशतं प्राह स योगिराट् ।
श्लोकानां चैव गीताभिश्चतुर्विंशतिभिः परः ॥ १४ ॥

तैरेव कथिताश्चासन्सर्वेषामधिकारिणाम् ।
संसारव्यवसायस्य प्रकाराश्च चतुर्विधाः ॥ १५ ॥

ज्ञानं तथा च सङ्कल्पः कर्म योगश्च शाश्वतः ।
प्रत्येकं सन्ति लोकानां चैते चत्वार एव हि ॥ १६ ॥

व्यवसायानिमान्सर्वानवलंब्यैव शाश्वतान् ।
संसरन्ति च सर्वेऽपि लोकनाथा महेश्वराः ॥ १७ ॥

व्यवसायप्रकाराणां चतुर्णां तु विशेषतः ।
प्रत्येकं षट्प्रकाराश्च नियताः सन्ति धर्मतः ॥ १८ ॥

अत एव हि गायत्र्या संसारस्य महर्षयः ।
व्यवसायप्रकाराश्च कथ्यन्त इति निर्णयः ॥ १९ ॥

सर्वेषां व्यवसायानां भवतस्तौ सनातनौ ।
उपक्रमोपसंहाराविति नारायणोदितम् ॥ २० ॥
सर्वविद्यास्वरूपा च गीता सेयं निगद्यते ।
राजविद्येति तामेव योगिनश्च महर्षयः ॥ २१ ॥
तथा परमहंसाश्च प्रवदन्ति स्वधर्मतः ।
इयं हि कर्मविद्येति कर्मयोगिभिरुच्यते ॥ २२ ॥
ज्ञानिभिर्ज्ञानविद्येति भक्तैर्भक्तपरेति च ।
सा योगब्रह्मविद्येति प्रोच्यते शुद्धयोगिभिः ॥ २३ ॥
तस्मादेव हि सर्वेषामधिकारश्च वर्तते ।
गीताशास्त्रे चेति शुद्धैः कथ्यते ब्रह्मवादिभिः ॥ २४ ॥

इत्याह । अत्र हि गीतावतारसमयप्रतिपादनपूर्वकं महिमा हि श्रीभगवद्गीतायास्तदनुबन्धिस्वरूपं चाधिकारिवंद्यं विशेषतो ह्यभिवर्णितं भवति । एवं तेनैव भगवता नारदेनाऽभिहितं सनातनधर्मदीपिकायाम् ।

आजन्माऽऽमरणं यच्च शास्त्रं वै मनुजान्पुनः ।
यथादेशं यथाकालं यथावस्थं च शिक्षयेत् ॥
धर्मं सनातनं शुद्धं प्रत्यक्षं सार्वलौकिकम् ।
सम्भावैक्यफलदमिहाऽमुत्र च शङ्करम् ॥
तद्धि शास्त्रं महात्मानो गीतेत्याहुर्विचक्षणाः ।
न वैष्णवमिदं शास्त्रं न शाक्तं न च शांभवम् ॥

न बौद्धं न च काणादं न सांख्यं न च यौगिकम् ।
न तन्त्रं नैव वेदान्तं विशेषसमयं न च ॥
शुद्धं च तदिदं शास्त्रं स्तुवन्ति पूर्वसूरिणः ।
तस्मात्संसारिभिर्नित्यं संसेव्यं तदिदं भुवि ॥"

इति । अत्र च गीतायाः स्वरूपम्, तस्यां सर्वेषामधिकारः, तथा तस्याः संसारिजनविज्ञेयत्वं च व्याख्यातं भवति । एवं भगवता कुमारेणाऽपि सैषा हि श्रीभगवद्गीता—

---

॥ कुमारकारिकाः ॥

---

श्रीकृष्णं परमात्मांशं योगिनं धर्मनायकम् ।
नत्वा भगवतीं गीतां व्याख्यास्यामो यथामति ॥ १ ॥
अथाऽसौ सञ्जयो योगी नियुक्तो गुरुणा पुनः ।
धृतराष्ट्राय राज्ञे च स्वार्थवशेन शोचते ॥ २ ॥
प्रोवाच तां भगवतीं स्वार्थदोषप्रणाशिनीम् ।
कुरुक्षेत्रे समारब्धे संग्रामे भारते पुनः ॥ ३ ॥
योगिध्येयं स्वांघ्रिमूलं स्वार्थदोषनिवृत्तये ।
शरणं संप्रपन्नाय तस्मै पार्थाय धीमते ॥ ४ ॥
संसारव्यवसायानां शिक्षकेण महात्मना
कृष्णेन या चोपदिष्टा गीता सर्वार्थदायिनी ॥ ५ ॥

सेयं भगवती गीता गायत्रीलक्षणा परा ।
पादैश्चतुर्भिर्युक्तेति कथ्यते शुद्धयोगिभिः ॥ ६ ॥
प्रतिपादं चैवमेव प्रतिपाद्यं तदुच्यते ।
ब्रह्मस्वरूपसंसिद्धं ब्रह्मविज्ञानसाधनम् ॥ ७ ॥
विषयः प्रथमे पादे विज्ञेयः प्रतिपादितः ।
स एव ज्ञानपादः स्यान्मुख्यं धर्मस्य कारणम् ॥ ८ ॥
यतः सर्वं ज्ञानमूलं विना ज्ञानं न किंच न ।
तस्माच्च ज्ञानपादस्य प्राथम्यं श्रुतिचोदितम् ॥ ९ ॥
द्वितीये चैव चरणे संबन्धः स च कीर्तितः ।
विना चास्ति हि संबन्धमर्थानां नैव संस्थितिः ॥ १० ॥
भवेद्विषयविज्ञानात्संभन्धो नियतो भवेत् ।
ईशेशितव्यरूपश्च संबन्धः स च दृश्यते ॥ ११ ॥
स्यादेष भक्तिपादश्च शक्तिसङ्कल्पलक्षणः ।
ततश्चायं द्वितीयश्च भक्तैः शुद्धैर्निगद्यते ॥ १२ ॥
तथा पादे तृतीये तु प्रोक्तमस्ति प्रयोजनम् ।
विद्याधिकारिवेद्यं च ज्ञानसङ्कल्पयोगजम् ॥ १३ ॥
सोऽयं भवेत्कर्मपादः शुद्धसन्यासलक्षणः ।
ततश्चायं तृतीयश्च कथ्यते कर्मयोगिभिः ॥ १४ ॥
तुरीये चैव पादे तु योग एव निगद्यते ।
समाहारस्वरूपश्च ज्ञानसङ्कल्पकर्मणाम् ॥ १५ ॥

सोऽयं भवेद्योगपादः प्राप्तिलक्षणलक्षितः ।
प्रपञ्चोपशमत्वेन तुरीय इति कथ्यते ॥ १६ ॥
एवं पादैश्चतुर्भिश्च भूषिता ब्रह्मसंमिता ।
योगविद्या तु वेद्या स्यात्परप्रेप्सुमुमुक्षुभिः ॥ १७ ॥
इत्थं हि योगविद्याया मुख्यत्वं श्रुतिचोदितम् ।
कर्मविद्यासु सर्वासु तथा भक्तिपरासु च ॥ १८ ॥
विद्यासु च तथा ज्ञानपरासु च महर्षयः ।
विद्यते जीवभूतश्च यतो योगः सनातनः ॥ १९ ॥
ततो विद्याः समस्ताश्च यथाकालं प्रकाशिताः ।
योगविद्याप्रधानाः स्युरित्येतद्भगवन्मतम् ॥ २० ॥
इत्थं पुनर्योगविद्यामहिमा ह्यवगम्यते ।
यं विज्ञाय परां सिद्धिं यान्ति सर्वे महर्षयः ॥ २१ ॥
या त्वात्मनः परा शक्तिर्व्यवसायक्षमा भवेत् ।
सा विद्याऽध्ययनादेव विकसत्यत्र देहिनाम् ॥ २२ ॥
या त्वात्मनः पराशक्तिः सा त्रिधा हि विभाव्यते ।
ज्ञानशक्तिरिच्छाशक्तिः क्रियाशक्तिरिति स्वयम् ॥ २३ ॥
या परा चैव शक्तिः सा योगशक्तिरितीर्यते ।
आत्मशक्तेर्विकासश्च न पूर्णो ज्ञानविद्यया ॥ २४ ॥
न भक्तिविद्यया चाऽपि न तथा कर्मविद्यया ।
परं तु पुष्कलश्चैव विकासः कार्यसाधनम् ॥ २५ ॥

तदात्मशक्तेर्भवति योगविद्यार्थबोधतः ।
तस्मात्तदात्मनश्चैव ज्ञानशक्त्यादयश्च याः ॥ २६ ॥
सर्वाश्च ताः शक्तयश्च योगशक्त्यैव केवलम् ।
विकसन्तीति सिद्धान्तः पुरा शङ्करभाषितः ॥ २७ ॥
तस्माच्च योगविद्यैव सर्वविद्यासु शोभना ।
जीवभूता चकास्तीति शुद्धार्यैः समुदीर्यते ॥ २८ ॥
पराऽवरेषु सर्वेषु स्थानेषु च महर्षयः ।
आत्मसंसाररूपाणि सञ्जातान्यात्मशक्तितः ॥ २९ ॥
ज्ञानं भक्तिस्तथा कर्म चेति त्रीणीह यानि च ।
व्यवसायस्वरूपाणि तानीति कवयो विदुः ॥ ३० ॥
यद्यपि प्राणिनां तानि प्रत्येकं नियतानि च ।
तथापि संसारफलसाधनानि न सन्ति हि ॥ ३१ ॥
यदा हि योगयुक्तानि तानि सन्ति परस्परम् ।
तदैवैषां साधनत्वं त्रयाणां तु निरूपितम् ॥ ३२ ॥
तस्मात्तुरीयो योगश्च व्यवसायः परो मतः ।
त्रयाणां व्यवसायानामुक्तानां हि महर्षयः ॥ ३३
प्रवर्तको जीवभूतो भवेदिति हि निर्णयः ।
संसारव्यवसायस्य परप्राप्तिर्महाफलम् ॥ ३४ ॥
ततश्च योगपादोऽपि तत्त्वविद्यासु शस्यते ।
तस्मादेव भगवता योग एव हि संस्तुतः ॥ ३५ ॥

विना योगं च परमं व्यवसायं हि यः पुमान्।
ज्ञानी भक्तः कर्मठश्च सोऽधिकारी स्वधर्मतः ॥ ३६ ॥
असंपूर्णां विभूतिं च कृपणो भजति स्वयम्।
असंपूर्णा विभूतिश्च धर्मनाशे च नश्यति ॥ ३७ ॥
किं चाधिकारिणां तेषां यथाधिकारमेव हि।
नियतं च मुमुक्षुत्वं परप्रेप्सुत्वमेव हि ॥ ३८ ॥
भवेदिति हि सिद्धान्तः सर्वशास्त्रानुशिक्षितः।
सत्येवमधिकारी च कर्मठः कर्मशास्त्रवित् ॥ ३९ ॥
भक्तश्च भक्तिशास्त्रज्ञो ज्ञानी चाध्यात्मशास्त्रवित्।
किं मुमुक्षति निर्वेदात्प्रमोदात्किं परं पुनः ॥ ४० ॥
प्रेप्सति स्वानुरूपेण धर्मेण च यथाविधि।
इति शास्त्रविचाराच्च बुध्या चैव विशुद्धया ॥ ४१ ॥
महतामुपदेशेन विचार्यं स्याद्यथाबलम्।
विचार्यमाणे सर्वस्मिन्नेवं हि परिबुध्यते ॥ ४२ ॥
सुकृतं दुष्कृतं चैव ज्ञानसंकल्पकर्मजम्।
बन्धहेतु च यच्चाऽस्ति त्यज्यते तन्मुमुक्षुभिः ॥ ४३ ॥
ज्ञानिभिश्चैव भक्तैश्च कर्मठैर्नियतात्मभिः।
एवं मोक्षादेव सर्वैः प्राप्यते च परं पदम् ॥ ४४ ॥
अत एव हि मोक्षस्य प्राप्तेश्चैव विशेषतः।
योगः स्यात्कारणं चेति प्रोक्तं भगवता पुनः ॥ ४५ ॥

प्रेप्सा मुमुक्षा योगेन सिद्धा स्यादधिकारिणाम् ।
बीजं गृण्हन्ति योगेन परसंसारसाधनम् ॥ ४६ ॥
योगशक्त्या हि संपन्नाः परप्रेप्सुर्मुमुक्षवः ।
तस्माच्च योगशक्त्या स्युः परमा ह्यधिकारिणः ॥४७॥
ब्रह्मा विष्णुः शिवश्चैव तथाऽन्ये च महर्षयः ।
योगशक्त्यैव परमं ह्यधिकारं भजन्ति च ॥ ४८ ॥
योगशक्त्या हि युक्तश्च सर्वमेकत्व पश्यति ।
योगशक्तिः परा शक्तिर्ब्रह्माऽनन्या च सा त्रिधा ॥४९॥
देवी तथा च कल्याणी त्रिगुणा चेति भेदतः ।
कथ्यते योगशास्त्रज्ञैः सर्वशक्तैर्महर्षिभिः ॥ ५० ॥
पुनरेवं हि योगस्य महत्त्वं युक्तिसंमतम् ।
सदृष्टान्तं हि वक्ष्यामः शृणुध्वं मुनिपुङ्गवाः ॥ ५१ ॥
अयः कूटे च महति बहवः सन्ति चाणवः ।
परस्परं तु ते सर्वे चैकात्म्यज्ञानसाधनम् ॥ ५२ ॥
तदुत्तमस्नेहरूपो यश्च योगः सनातनः ।
तेनैव गुंभिताः सन्तो ह्यवष्टभ्य यथाबलम् ॥ ५३ ॥
स्वसमुदायसत्तां हि भवन्तीति च बुध्यते ।
प्रत्येकं परमाणूनां सर्वेषां सर्वमण्डले ॥ ५४ ॥
सृष्ट्यादिव्यवसायश्च यतो भिन्नो हि दृश्यते ।
ततोऽणूनां स्वभावश्च तेषां शक्त्यैव योगिनः ॥ ५५ ॥

निर्णय इति सिद्धान्तः पुरा शङ्करभाषितः ।
यथाऽणूनां समस्तानां विचित्रः स्याद्धि शक्तितः ॥५६॥
विकासश्च तिरोधानं तथा तेषां हि दृश्यते ।
विचित्रा देहसंपत्तिर्व्यवसायश्च तादृशः ॥ ५७ ॥
परमात्मसंन्निधानतिरोधाननिदानके ।
तद्विकासतिरोधाने शक्तेश्च भवतः क्रमात् ॥ ५८ ॥
सर्वेषां योगशक्त्या हि सन्निधानं परात्मनः ।
जायते स्वात्मनि परं ततो योगः सनातनः ॥ ५९ ॥
त्रिषु च व्यवसायेषु ज्ञानादिषु महर्षयः ।
इति तस्माद्योगविद्या विद्यासु परमा भवेत् ॥ ६० ॥
किं च शक्तिः परा या हि परप्रकृतिभाविता ।
ब्रह्मणः सा योगदेवी ब्रह्माऽनन्येति गीयते ॥ ६१ ॥
संसारव्यवसाये च सति सङ्कल्पभाषिते ।
परया योगदेव्या च पूर्णः परिणयो भवेत् ॥ ६२ ॥
ब्रह्मप्रतिनिधेस्तस्य पुरुषस्य विशेषतः ।
एवं परिणयादेव ब्रह्मशक्त्योर्यथाक्रमम् ॥ ६३ ॥
प्रकृतेरात्मनश्चैव प्रादुर्भावश्च दृश्यते ।
शक्त्यधिष्ठानभेदेन प्रकृतिः सा च कथ्यते ॥ ६४ ॥
प्रकृतिः सा जगन्माता गायत्री संमिता भवेत् ।
देव्यादिरूपभेदेन त्रिविधेत्यपि सोच्यते ॥ ६५ ॥

या ह्यात्मशक्तिर्भवति कथिता सोपचारतः ।
भवेत्प्रकृतिशक्तिश्चेत्युच्यते शुद्धयोगिभिः ॥ ६६ ॥
या भवेद्ब्रह्मशक्तिश्च परप्रकृतिभाविता ।
सा चैका योगदेवीति कथ्यते च महात्मभिः ॥ ६७ ॥
यदत्र च विशेषेण विज्ञेयं स्यान्मुमुक्षुभिः ।
अग्रे यथायथं तच्च व्याख्यातं हि भविष्यति ॥ ६८ ॥
तच्छक्तेरेव योगाच्च सर्वेषामात्मनां भवेत् ।
संसारव्यवसायश्च प्रशस्तः सविभूतिकः ॥ ६९ ॥
परस्थानस्य संप्राप्तिर्ब्रह्मसामीप्यलक्षणा ।
तद्योगशक्तिविज्ञानं जायते योगविद्यया ॥ ७० ॥
तस्माद्योगब्रह्मविद्या गीताऽध्येया च योगिभिः ।
कर्मठैश्चैव भक्तैश्च ज्ञानिभिः शुद्धयोगिभिः ॥ ७१ ॥

इति, सयुक्तिकं योगब्रह्मविद्यास्वरूपत्वेन तदुत्तमसर्वाधिकारिवेद्यत्वेन चाभिवर्णिता भवति । एवं भगवता गोभिलेनाऽपि श्रीभगवद्गीता च सेयम्—

---

## गोभिलकारिकाः

---

"शुद्धधर्ममण्डलस्य धर्मशास्त्रं सनातनम् ।
यच्च गीताऽभिधं तद्वै व्याख्यास्यामो यथामति ॥ १ ॥

श्रीकृष्णवदनांभोजगळिताऽशेषतापनुत् ।
गीता चकास्ति षड्विंशदध्यायैरन्विता परा ॥ २ ॥"

इति, शुद्धधर्ममण्डलप्रवर्तकलोकाचार्यभगवन्नारायणलोकानुग्रहशिक्षोपयोगिसनातनधर्मशास्त्रस्वरूपत्वेन, तापत्रयाभिसंतप्तसंसारिजनरक्षकत्वेन चाभिवर्णिता भवति । एवं महाभारते गीतार्थोपब्रह्मणरूपे चाऽनुगीतापर्वणि प्रथमाध्याये—

" विदितं ते महाबाहो संग्रामे समुपस्थिते ।
माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥
यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥
मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः ।
भवांस्तु द्वारकां गन्ता न चिरादिव माधव ॥"

इति, भारतयुद्धारंभसमये तद्भगवतोपदिष्टस्य च गीतार्थस्य स्वप्रमादाद्विस्मृतत्वेन, पुनश्च सविनयं स्वस्य तद्भगवत्स्वरूपविज्ञातृत्वस्य च प्रतिपादनपूर्वकं समग्रं च तद्गीतार्थमेव महला हि कौतूहलेन परिपृच्छते पार्थाय, तद्गीताचार्यश्च भगवान्वासुदेवश्चेत्थमाह—

"श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥

अबुध्या यन्न गृण्हीथास्तन्मे सुमहदप्रियम् ।
न च साऽद्य पुनर्वक्तुं स्मृतिर्मे संभविष्यति ॥
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव ।
न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय ॥
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यं तन्मया भूयस्तथावक्तुमशेषतः ॥
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥"

इति। अत्रेत्थं हि भगवद्वचनतात्पर्यार्थोऽवगम्यते—हे पार्थ ये च प्रतिब्रह्माण्डं प्रतिपुरुषं च समवस्थिताः, ज्ञानलोकः सङ्कल्पलोकः कर्मलोकः, इति तत्तद्व्यवसायानुरूपनामभिः प्रसिद्धास्त्रयः शाश्वताश्च स्वभावा लोकशब्दवाच्याः, यश्च तल्लोकव्यवसायानुरूपो धर्मश्च प्रत्यक्षसिद्धः सनातनः, ते सर्वेऽपि यथाकालं हि मया ते समुपदिष्टाः। तथा तेषु सर्वेषु धर्मेषु गुह्यतमो यो योगधर्मश्च विद्यते, सोऽपि ते ह्यतिमात्रप्रीत्या च समुपदिष्टः। अज्ञानाच्च ते सर्वेऽपि भवता विस्मृताः, इति तु भवति मे महच्च शोकस्थानम्। तदर्थस्मृतिश्च न च मे पुनः संभविष्यति। अश्रद्धयैव हि भवता तेऽर्थाः सन्ति विस्मृताः, कथं पुनश्च ते तादृशाय तेऽर्थाः समग्रेण वक्तुं शक्यन्ते। यश्च पुनस्तदानीं सर्वगुह्यतमत्वेन ते प्रोक्तः, सोऽयं धर्म एव ब्रह्मणः स्वरूप-

विज्ञाने च पर्याप्तो भवति। कथं पुनस्तथाऽन्यो धर्मो ह्यशेषतो वक्तुं शक्यते। तत्सर्वगुह्यार्थोपदेशयोग्यभगवद्विशेषावेशाविष्टेन हि मया तद्ब्रह्मस्वरूपं तेऽभिहितम्। अस्तु नामैवम्, अस्मदुक्तार्थोपबृंहणरूपानितिहासांश्चाऽन्यानद्य तेऽहं वक्ष्यामि, इति। अनेन च भगवान्वासुदेवस्तन्महनीयगीतार्थस्य विस्मर्तुरर्जुनस्य केवलं प्राकृतधर्मसिद्धं च तादृशमविनीतत्वं विनन्दन्, पूर्वं हि स्वोक्तायाश्च श्रीभगवद्गीतायाः स्वरूपं सामान्यतः संग्रहेण प्रतिपादयन्, तथा तद्गीतार्थांश्चाऽपि पुनर्यथावच्च वक्तुं स्वस्य तादृशमाहात्म्याऽभावमभिनयन्, केवलं तद्गीतार्थोपबृंहणरूपानितिहासांश्च सिद्धकाश्यपसंवादादिकान्वक्ष्यामीति प्रतिजज्ञे, इतिविज्ञायते। अत्रत्यभगवद्वाक्यरहस्यार्थस्वारस्यादेव श्रीभगवद्गीतायाश्च पूर्वोक्ताया योगब्रह्मविद्यास्वरूपत्वमस्तीत्यवगम्यते। अत एव तद्भगवदुक्तेतिहासे च सिद्धकाश्यपसंवादाख्ये प्रथमे, सिद्धं प्रतीत्थम्—

"कथं शरीराच्च्यवते कथं चैवोपपद्यते।
कथं कष्टाच्च संसारात्संसरन्परिमुच्यते॥
आत्मानं वा कथं युक्त्वा तच्छरीरं विमुञ्चति।
शरीरे च पुनर्मुक्तो कथमन्यत्प्रपद्यते॥
कथं शुभाऽशुभे चाऽयं कर्मणी स्वकृते नरः।
उपभुङ्क्ते क्व वा कर्म विदेहस्योपतिष्ठते॥"

इति, काश्यपकृतप्रश्नस्य यथाक्रमं च तत्सिद्धोत्तरोक्तिषु तृतीयत्वेनेत्थम्—

"यः स्यादेकान्त आसीनस्तूष्णीं किंचिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स निरारंभको भवेत् ॥" इत्यारभ्य,

"विहाय सर्वसङ्कल्पान्बुध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवाऽनलः ॥
सर्वसंस्कारनिर्मुक्तो निर्द्वंद्वो निष्परिग्रहः ।
तपसा चेन्द्रियग्रामं यश्चरेन्मुक्त एव सः ॥
विमुक्तः सर्वकर्मभ्यस्ततो ब्रह्म सनातनम् ।
परमाप्नोति संशान्तमचलं नित्यमक्षरम् ॥"

इत्यन्तैश्च प्रबन्धैरधिकारिणां मुक्तिप्रकारं हि यथावच्च व्याख्याय, ततश्च तन्मुक्तिसाधनतमत्वेन कर्तव्या ह्यात्मोपासना च योगब्रह्मविद्याधिकारिनियतेतीत्थम्—

"ततः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
यज्ज्ञात्वा सिद्धमात्मानं देहे पश्यन्ति योगिनः ॥"

इति, प्रतिपादिता भवति । तथा च परप्रेप्सुभिर्मुमुक्षुभिश्च सर्वधर्मपरित्यागपूर्वकं कर्तव्या या चाऽऽत्मोपासना, तस्याश्च योगसेवैव योगब्रह्मविद्यैकसमधिगम्या परमं साधनमस्तीति कथितं भवति । एवं ब्राह्मणदंपतीसंवादे च भगवदुक्ते पितृदेव-

ताभिः परशुरामं प्रति कथितेनाऽळर्कोपाख्यानेन च शान्ताऽऽत्मो पासकमुमुक्षुजनोपादेयत्वेन योगब्रह्मविद्यायाश्चैव मुख्यत्वमित्थम्—

"ततोऽलर्कस्तपो घोरं तत्रैवाऽऽस्थाय दुष्करम् ।
नाऽध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु ॥
सुसमाहितचेतास्तु स ततोऽचिन्तयत्प्रभुः ।
स विचिन्त्य चिरं कालं ह्यलर्को द्विजसत्तम ॥
नाऽध्यगच्छत्परं श्रेयो योगान्मतिमतां वरः ।
स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ॥
इन्द्रियाणि जघानाऽऽशु बाणेनैकेन वीर्यवान् ।
योगेनाऽऽत्मानमाविश्य सिद्धिं पारमिकां गतः ॥
विस्मितश्चाऽपि राजर्षिरिमां गाथां जगाद हि ।
अहो कष्टं यदस्माभिः सर्वं बाह्यं ह्यनुष्ठितम् ॥
भोगतृष्णासमायुक्तैः पूर्वं राज्यमुपासितम् ।
इति पश्चान्मया ज्ञातं योगान्नाऽस्ति परं सुखम् ॥
इति त्वमनुजानीहि राम मा क्षत्रियान्वधीः ।
तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ॥"

इत्युक्तम् । अत्र योगो हि तपः शब्दार्थः । समग्रश्लोकार्थास्तु योगगीताव्याख्यानाऽवसरे व्याख्याता भविष्यन्ति । किं चैवं

गुरुशिष्यसंवादरूपोपाख्याने च भगवदुक्ते ब्रह्मदेवेन महर्षीन्प्रत्युक्तोपदेशेषु योगब्रह्मविद्यागौरवं चेत्थम्—

"द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥
कर्म केचित्प्रशंसन्ति मन्दबुद्धितया नराः ।
ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥
कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।
पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनम् ॥
तस्मात्कर्मसु निस्स्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥
य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् ।
वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ॥
अपूर्वमकृतं नित्यं य एनमविचारिणम् ।
य एवं विन्देदात्मानमग्राह्यममृताशनम् ॥
अग्राह्यो ह्यमृतो भवति स एभिः कारणैर्ध्रुवः ।
आयोज्य सर्वसंस्कारान्संयम्याऽऽत्मानमात्मनि ॥
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ।
प्रसादे चैव सत्त्वस्य प्रसादं समवाप्नुयात् ॥"

इत्युक्तं भवति। "समत्वं योग उच्यते" इति भगवतैवोक्तत्वादत्र समः प्रसादश्च योग एवेत्यर्थः। अत एव स्वोक्तगीतार्थोपबृंहणरूपाऽनुगीतोपदेशान्ते च भगवता चैवम्—

"हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने।
सिद्धिं फलं च मोक्षश्च दुःखस्य च विनिर्णयः॥
नातः परं सुखं त्वन्यत्किंचित्स्याद्भरतर्षभ।
श्रुतवाञ्श्रद्दधानश्च पराक्रान्तश्च पाण्डव॥
यः परित्यजते मर्त्यो लोकसारमसारवत्।
एतैरुपायैः सः क्षिप्रं परां गतिमवाप्नुते॥
एतावदेव वक्तव्यं नान्तो भूयोऽस्ति किंचन।
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते॥"

इत्युक्तं भवति। अत्राऽयं भावः—यश्च पुनरधिकारी सद्गुरुशिक्षितो ज्ञानभक्तिकर्मरूपं च भावं लोकस्थैर्यहेतुमसारत्वेन विज्ञाय, विशुद्धैरुपायैश्च तं स्वभावं परित्यजति, स एव योगिप्राप्यां च परां गतिं प्राप्नोति। एवं परप्राप्तिरूपपञ्चमपुरुषार्थस्य परमं साधनं योगश्च तदात्मोपासकानामचिरेण सिध्यत्येवेति। अत्र च भगवदुपपादितवचनैः सर्वधर्मपरित्यागपूर्वकमनुष्ठेयस्य च योगस्यैव परप्राप्तिसाधनत्वेन प्रतिपादितत्वाद्योगब्रह्मविद्यास्वरूपत्वं श्रीभगवद्गीतायाश्च सिद्धमेव भवति।

नन्वत्र यद्यप्यर्जुनस्य हि युद्धावेशाद्गीतार्थस्य पूर्वं श्रुतस्य विस्मृतिर्हि युक्ता, तथाऽपि भगवतो नारायणांशभूतस्य वासुदेवस्य स्वोक्ताया एव गीतायास्तादृशी विस्मृतिश्च कथं वक्तुं युक्तेति चेदुच्यते, स्वेनैवावतारान्तरे श्रीकृष्णावतारोपदिष्टगीतार्थोपबृंहणरूपत्वेन समुपदिष्टानर्थविशेषांश्च लोकानुग्रहार्थं विवक्षुर्भगवान् "न च साऽद्य पुनर्वक्तुं स्मृतिर्मे संभविष्यति" इति सलीलमाहेति तद्भगवदाशयस्य विज्ञेयत्वात्। तत एव तद्भगवता तदनुगीतोपदेशान्ते च स्वोक्तगीतार्थविस्मृतिश्च स्वस्य नास्तीति कथितं भवतीति विज्ञायते, यतश्च भगवता तेनैव 'स्वस्य तदर्थाऽनुस्मृतिरस्ति, इति तत्र प्रतिपाद्यते। यथा हि—

"कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा।
तदाऽपि हि रथस्थस्त्वं श्रुतवानेतदेव हि॥
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्नरिकर्शन।
सर्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम्॥
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते।
मया तव महाबाहो तस्मादत्र मनः कुरु॥"

इति। यदि पूर्वं पार्थाय प्रोक्तायाश्च गीताया ह्यर्थस्य विस्मृतिर्भगवतोऽपि भवति, तदा कथमसौ भगवान् "रथस्थस्त्वं श्रुतवानेतदेव हि, पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते" इत्यादि वदेत्। तस्माद्भगवतः "न च साऽद्य" इत्युक्तिश्च छेकापह्नुतिरूपैवेति

विज्ञेयम्। नन्वस्तु नामैवम्, पूर्वोक्तगीतार्थोपब्रह्मणरूपाः सिद्ध-काश्यपसंवादादिरूपाश्चेतिहासास्तत्तदधिकारिभिरेव प्रोक्ता भवन्तु, 'अनेनैव भगवता लोकानुग्रहार्थमवतारान्तर एव ते प्रोक्ताः,' इत्यत्र सुदृढतरप्रमाणाभावादिति चेत्, न—तथा कथने च बहूनां प्रमाणभूतानां च भगवद्वाक्यानां विज्ञेयत्वेन सत्त्वात्। यथा हि—

"को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो॥"

इत्यनुगीतान्ताऽर्जुनप्रश्नस्य तु भगवान्वासुदेवश्चेत्थमुत्तरमाह—

"अहं गुरुर्महाबाहो मनश्शिष्यं च विद्धि मे।
त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनञ्जय॥
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत॥"

इति। अतश्च तादृशानि भगवदुक्तानि च तानि वाक्यानि तादृशार्थप्रमाणवचनानि सन्ति। अत्र प्रथमश्लोकस्थमनश्शब्देन तूपचाराद्गुरुपरतन्त्रवृत्तिः पुमानभिधीयते। स एव शिष्यश्च भवति। एवं शिष्यचित्तवृत्त्यन्धकारनिवर्तको गुरुरेवाऽहंशब्दार्थः, इति भगवतैवोक्तः। तथा च कालान्तरे तदनेनैव भगवता ब्राह्मणजातिगुरुरूपेण च स्वाधीनाय सच्छिष्याय स्वोक्तगीतार्थोपब्रह्मणरूपेतिहासाश्च समुपदिष्टाः, इति विज्ञायते। किञ्चैवमेतच्छ्रीभगवद्गीतोपदेशात्पूर्वमपि तदनेनैव भगवता ह्यवतारान्तरं समधि-

तिष्ठता च वासुदेवेन लोकानुग्रहार्थं सोऽयं गीतार्थश्च समुपदिष्ट इति तद्भगवद्वचनादेवाऽवगम्यते। यथा—

"इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥
एवं परंपराप्राप्तमिमं राजर्षयो विदुः।
स कालेनैव महता योगो नष्टः परंतप॥
स एवाऽयं मया तेऽद्य योगः प्रोक्तः सनातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥"

इति। तस्मात्प्रतिकल्पं हि नारायणांशभूतेन च विद्याधिकारिणा यथादेशं यथाकालं यथाधिकारं च स्वधर्मोपदेशार्थं नानारूपेण च भगवताऽनेनैव लोकानुग्रहार्थं स्वाधिकारिभ्यश्च सेयं योगब्रह्मविद्या च समुपदिश्यते, इति निर्विवादं विज्ञायते। अत एव च भगवताऽनेनैव श्रीभगवद्गीतायामवतारधर्मनिरूपणाऽवसरे चाध्याये हीत्थमुक्तं भवति—

"वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन॥
बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप॥"

इति। तत्र च प्रतिकल्पं च धर्मसंरक्षणार्थं नानारूपेण समवतीर्णानां ब्रह्मांशानां चाऽवतारपुरुषाणां सत्यप्यनेकस्मिञ्जन्मनि

विजातीये च, स्वयोगशक्त्या हि जातिस्मरत्वमप्यस्तीत्युक्तमिति विज्ञायते। अन्यच्चात्र वक्तव्यम्, तदवतारगीताध्याये व्याख्यातं भविष्यति। अत्राऽयं हि प्राचीनार्यसिद्धान्तः—कृष्णार्जुनयोश्च सत्यपि स्वतस्सिद्धे च तद्भगवन्नरनारायणांशे, लोकानुग्रहार्थं हि सति च कर्तव्ये विशेषकर्मणि, तौ च भवतः स्वोत्कृष्टभगवदात्मशक्तिविशेषावेशसमाविष्टौ। एवमेव हि भवति सर्वेष्वप्यवतारेषु। अत एव—

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥"

इति, तदवतारगीतायामुक्तं भवति। अत्र च ब्रह्मांशानां चावतारपुरुषाणां सति च कर्तव्ये दिव्ये विशेषकर्मणि, दिव्यभावाऽऽवेशश्चाऽस्तीत्युच्यते। तथा च यच्चास्ति वाचिकं कायिकं मानसं च कर्म त्रिविधं तुरीयं च, तत्सर्वमपि तदवतारपुरुषैः स्वात्मनियतं माहेश्वरं परं च भावमवलंब्यैव क्रियते, इति भावः। अतश्च "परं भावमजानन्तो मम भूतमहेश्वरम्" इति तत्रैव भगवतोक्तम्। जन्म कर्म चेत्यत्र जन्म शब्देन कर्मसमनियतस्वभावो ह्यभिधीयते। स च माहेश्वरो भाव एव। स च स्वात्मनियतः। ततश्च प्रकृते लोकानुग्रहार्थं हि तद्योगब्रह्मविद्यारूपगीतायाश्चावश्यकत्वेन तदुपदेशस्य स्वात्मनियतदिव्यभावकार्यत्वेन च, तदुपदेशार्थं तदुपदिष्टार्थग्रहणार्थं च तत्कृष्णार्जुनयोः

सद्गुरुशिष्यत्वहेतूत्कृष्टात्मशक्तिविशेषावेशश्च भवति युक्त एव। अथ च संपूर्णे सत्याचार्याशिष्यकार्ये, तादृशात्मशक्तिविशेषावेशोऽप्यन्तर्दधे। तस्मात्कालान्तरे तयोः प्राकृतशक्तिदृष्ट्या तु तदीयार्थविस्मृतिर्युक्तैव भवतीति। "अहं गुरुः" इत्यादौ तु-अहं शब्दस्याऽऽत्मार्थकत्वम्, मनश्शब्दस्य सर्वोपरतत्वेन सर्वोपलब्धिसाधनत्वेन च ग्राहकत्वं चार्थः। तथा च सर्वेष्वपि योगिरूपेष्ववतारेषु च प्रत्येकम् 'स्वशुद्धात्मशक्तिविशेषावेशसमुद्भूताञ्छुद्धमनस्संग्रहीतानर्थविशेषांश्च धर्मसंरक्षणार्थं लोकेभ्यः समुपदिशामि' इति, नित्ययुक्तयोगिजनयोगक्षेमकराऽवतारधर्मश्चाऽनुशिक्षितो भवतीति विज्ञायते। अत एव च योगब्रह्मविद्योपदेशाधिकारनिर्वाहकभगवदवतारस्वरूपं च "जन्म कर्म च मे दिव्यम्" इत्यभिवर्णितमित्थं भगवतैवाऽनुगीतायां व्याख्यातम्। तथा हि----

"क्वनु सा ब्राह्मणी कृष्ण क्व चाऽसौ ब्राह्मणर्षभः।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत॥"

इत्यर्जुनप्रश्नस्य तु ब्राह्मणीब्राह्मणशब्दार्थनिर्देशेन चेत्थमुत्तरमाह भगवान्—

मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय॥"

इति। अत्राऽहं शब्दस्य सर्वशरीरान्तर्वर्ति क्षेत्रज्ञसंज्ञकमात्मस्वरूपं च माहेश्वरम्, ब्राह्मणशब्दस्य च शुद्धं मनः, ब्राह्मणी-

शब्दस्य शुद्धात्मलक्षणा चेतना बुद्धिश्चाऽर्थ इति, तद्भगवद्वच-सैवाऽवगम्यते। ततो गुरुब्राह्मणादिशब्दानां रहस्यार्थस्यैवाऽधि-कारिवेद्यत्वेन मुख्यत्वमिति च भगवदभिमतमेवेति सिद्धम्। एवं प्रशस्ततमो गुरुशिष्याधिकारश्च ब्रह्मांश एवेति "गुरु-शिष्यादिभेदेन ब्रह्मैव प्रतिभासते" इत्यादिश्रुतिभिरवगम्यते। एवमेव च देवतिर्यङ्मनुष्यादिरूपं च प्रकृतिमण्डलं समधितिष्ठ-दात्मस्वरूपमनुप्रविशतैव भगवता ब्रह्मप्रतिनिधिना च परम-पुरुषेण नारायणेन यथायुगं स्वधर्मोपदेशादेवाऽवबुध्यते सर्वधर्म-सेतुरिति, महाभारतानुगीतापर्वणि श्रीकृष्णेनेत्थमुच्यते----

"बह्वीः संसरमाणो वै योनीर्वर्तामि सत्तम।
लोकसंरक्षणार्थाय धर्मसंस्थापनाय च॥
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव।
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाऽऽप्ययः॥
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च।
अधर्मे वर्तमानानां सर्वेषामहमच्युतः॥
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे।
तास्ता योनीः प्रविश्याऽहं प्रजानां हितकाम्यया॥"

इति। अत्राहंशब्दार्थः परमात्मा भवति। इत्थं सनातनधर्म-दीपिकायामपि भगवता नारदं प्रतीत्युक्तम्---

" शिष्यधर्मं नरो भूत्वा दर्शयामीह नारद ।
नारायणस्वरूपेण गुरुधर्ममहं पुनः ॥
साधुसंरक्षणार्थाय धर्मसंरक्षणाय च ।
गुरुशिष्यस्वरूपेण स्थितं मां हि युगे युगे ॥
देवा महर्षयश्चैव सिद्धा राजर्षयस्तथा ।
भक्त्या परमया चैव पूजयन्ति यथाबलम् ॥ "

इति । एवमधिकारिणां च ज्ञानिनां यश्च पुनस्त्याज्योपादेय-विज्ञानप्रकारः, स च तदधिकार्यात्मभावसंस्थितेन च परमात्मना समुपदिश्यत इति " नाशयाम्यात्मभावस्थोऽप्यहमज्ञानजं तमः " इति भागवतैवोच्यते । भगवतो ह्यज्ञानजाततमोनाशकत्वकथनेन शुद्धज्ञानप्रकाशकत्वमप्यर्थसिद्धं भवतीति विज्ञेयम् । तत एव " ददामि बुद्धियोगं तं येन मामुभयान्ति ते " इत्यवतारधर्मश्च भगवता तादृशः प्रतिपादितः । अत एवेत्थं भवति योगिनां समयः—'दिव्यशुद्धज्ञानोपदेशार्थं हि भगवान्परमात्मा तत्तत्सं-सारव्यवसायप्रवर्तकस्याऽऽत्मनश्च क्षेत्रज्ञसंज्ञकस्य शरीरं शुद्धाकाश-परमाणुकल्पितं महाशब्दगुणकं च स्वतैजसांशेन समाविश्य, तांश्च यथारूपं संसारव्यवसाये प्रवर्तयति । तत एव च " एकः परमात्मा ब्रह्मप्रतिनिधिश्च लोकानुजिघृक्षया शिष्याऽऽचार्य-कार्यानुरूपाभ्यां च नरनारायणस्वरूपाभ्यां ह्यवतीर्णः सपरि-वारश्च सर्वगुह्यतमं सनातनं च धर्मं महर्षिभ्यः समुपदिशन्नद्या

ऽपि बदरिकाश्रमं समधितिष्ठति " इत्यैतिहासिकः समयः। तत एव च 'अहो महर्षयश्चाऽस्मिन्भुवने धर्मसंरक्षणार्थं तत्परब्रह्मनित्यशुद्धसङ्कल्पसिद्धा ह्यधिकारिणश्च सर्वेऽपि तस्य भगवतो नारायणस्य समुचितावेशादेव प्रशस्ततमाः पूज्याश्च भवन्ति" इति पौराणिकश्च समयः। ये तु पुनर्लोकान्तरादस्मिंश्च जगति धर्मगुप्तये नानारूपेण समागताश्चावतारपुरुषाः, तेषामपि यथाकालं यथादेशं यथाऽधिकारं यथाकार्यं च तद्भगवन्नारायणाऽधिकाराऽऽवेशश्चाऽऽवश्यको भवति। यावच्च पुनस्तद्भगवदावेशसंस्थितिः, तावदेव तादृशावतारपुरुषाणां चैतल्लोकगतानां भवति स्वचिकीर्षितश्च तादृशो विशेषव्यवसायः। तस्मात्तादृशाऽवतारपुरुषाणामपि ब्रह्मांशानां पूर्णे सत्यात्मशक्तिविशेषकर्तव्यकार्ये, तदनुरूपविशेषावेशोऽप्यन्तर्भक्त इति, विज्ञेयम्। तथा च प्रकृते ह्येवमेव भगवतो वासुदेवस्येति। तथैवाऽवगम्येते तद्भगवदावेशतिरोधाने च यथाकार्यं हि भगवति च भार्गवे रामे, तादृशेष्ववतारपुरुषेषु च। अन्यच्चात्र वक्तव्यं विशेषेण, तदवतारगीताध्याये व्याख्यातं भविष्यतीत्यलमत्र विस्तरेण।

एवमेव " सेयं हि तत्त्वव्याख्यानपरा योगब्रह्मविद्या भवति, यस्यां च तत्त्वानां प्रभवाप्ययौ, तत्त्वानां निदानम्, तत्त्वात्मिकायाः प्रकृतेः स्वभावः, प्राकृतानां च गुणानां स्वरूपम्, प्रकृत्यधिष्ठितस्याऽऽत्मनः क्षेत्रज्ञसंज्ञकस्य स्वरूपम्, तद्व्यवसाय-

प्रकारः, नानाविधस्य ब्रह्मस्वरूपस्य तद्विभूतेश्च स्वरूपम्, तत्तदधिकारिलक्षणम्, अधिकारिणां प्राप्यं फलं चेत्यादि सयुक्तिकं समुपपादितं भवति। इयमपि श्रीभगवद्गीता तादृशी भवतीत्येनां च शुद्धां योगब्रह्मविद्यां गायत्रीलक्षणामिति वदन्ति टङ्कादयो ह्याचार्याः" इति प्राचीना वदन्त्याचार्याः। अत एव च भगवता चानुगीतायाम् "ब्रह्म यत्परमं ज्ञेयं तन्मे व्याख्यातुमर्हसि" इत्यर्जुनकृतप्रश्नस्य हि समञ्जसोत्तरत्वेन तु प्रतिपादिते च गुरुशिष्यसंवादे प्रथमम्—

"सत्याद्भूतानि जातानि स्थावराणि चराणि च।
तपसा तानि जीवन्ति जीवितं तद्धि सुव्रतम्॥"

इति, निरूपितम्। अत्र सत्यशब्दस्य तु भगवान्नारायणः तत्त्वानां मूलभूतश्च कथितो भवति। तदुक्तं महाभारते भगवता सनत्कुमारेण नारदं प्रति—सर्वस्य प्रभवः पूर्वमुक्तो नारायणो विभुः" इति। अत्र तत्त्वान्येव हि प्रकरणात्सर्वशब्दार्थः। तथा "तत्त्वं नारायणः परः" इति श्रुतिश्च। ततश्च भगवता तत्त्वविज्ञानस्याऽऽवश्यकत्वं चेत्थमुक्तम्—

"तत्त्वानामथ यो वेद सर्वेषां प्रभवाऽऽप्ययौ।
स धीरः सर्वभूतेषु न मोहमधिगच्छति॥"

तत्त्वानि यो वेदयते यथातथं
गुणांश्च सर्वानखिलाश्च देवताः।

विधूतपाप्मा प्रविमुच्य बन्धनं
स सर्वलोकानखिलान्समश्नुते ॥"

इति। अत्र च सदेवतानां सगुणानां च तत्त्वानां विज्ञानस्यैव सर्वमोहनिवर्तकत्वं शुद्धलोकप्रापकत्वं चोक्तं भवति।

ततो भगवता ह्यात्मनस्त्रितयात्मकसंसारव्यवसाये च ज्ञानस्य प्राथम्यम्, सन्यासान्तस्य कर्मणस्तपोरूपस्याऽन्त्यत्वं च "ज्ञानं त्वेव परं विद्यात्सन्यासस्तप उत्तमम्" इत्युक्तम्। अत्र तपश्शब्देन च कर्म बुध्यते। तच्च हि सन्यासान्तमेव, तुरीयविद्याधिकारिणां च योगिनां विना हि सन्यासं कर्मानुष्ठानपूर्तेरसंभवात्सन्यासादेव ह्यनुभूतसंसारव्यवसायनिवृत्तिरूपमोक्षस्य जायमानत्वाच्च। अत्र च तपोरूपस्य कर्मणः सन्यासप्रधानत्वात्सन्यासतपसोरभेदः। किंच प्राकृतेन सङ्कल्पसमुद्भूतेन च कर्मानुष्ठानेन ह्यात्मनो मालिन्यं च स्वस्वरूपप्रकाशविरोधि सञ्जायते। तेन च 'कर्ताहं भोक्ताहम्,' इत्यभिमानश्च तदात्मनः संभवति। तदभिमानरूपमालिन्यं च योगिनियतेन च तपसा विनश्यति। अत एव च "तपसा विशुद्धो ह्यात्मा भवति" इति श्रुतिः। सन्यासप्रधानं तप इत्युक्तम्। एवं सन्यासगर्भकर्मानुष्ठानमेव कर्मयोग इत्युच्यते। ततश्चाधिकारिणां सन्यासश्च शुद्धिरूपो भवति। ततश्च "सन्यासः प्रथमा शुद्धिः" इत्याचार्योपदेशः। यथा वा हि यजमानो ह्यवभृताख्यकर्मणा विशुद्धो भवति, तथा सन्यासाख्यकर्मणा विशुद्धा

भवन्ति कर्मयोगिनः। तस्माच्च कर्मानुष्ठानसञ्जातमात्मनो मालिन्यं च सन्यासादेव तपसश्च शुद्धिरूपाद्विनश्यतीति सिद्धम्। अत एव च भगवता ह्यनुगीतायामित्थमुक्तम्—

"ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्परम्।
निर्णिक्तमनसः पूता व्युत्क्रान्तरजसोऽमलाः॥
तपसा मोक्षमध्वानं गच्छन्ति पारमेश्वरम्।
सन्यासनिरता नित्यं ये च ब्रह्मविदो जनाः॥"

इति। अत्र 'ज्ञानेन तपसा' इति ज्ञानयोगकर्मयोगयोश्चाद्यन्तयोर्ग्रहणेन तन्मध्यवर्ती भक्तियोगश्चाऽप्याग्नावैष्णवन्यायेनाऽनुगृहीत इति विज्ञेयम्। न चैवं त्रयाणां ज्ञानभक्तिकर्मयोगानां चात्मस्वरूपमालिन्यहेतुत्वे तद्विधिवैय्यर्थ्यमिति वाच्यम्, कारणविज्ञानपूर्वकमधिकारिभिरनुष्ठीयमानानामेव च तेषां त्रयाणां विहितत्वात्। अत एव च कारणाऽविज्ञानपूर्वकमधिकारिभिरनुष्ठियमानानां तेषां निषिद्धत्वमवगम्यते। तदुक्तमित्थं परमेश्वरेण—

"ज्ञानेनैव विमुक्तास्ते सांख्याः सन्यासकोविदाः।
शारीरं तु तपो घोरं सांख्याः प्राहुः निरर्थकम्॥"

इति महाभारते। अत्र सांख्याश्च कारणविज्ञानिनः। वस्तुतस्त्वात्मनो न मालिन्यं स्वभावसिद्धम्, किं तु शारीरकमित्यन्यत्र व्याख्यातम्। एवमधिकारिणां सुखदुःखविनिर्मोकश्च तत्त्वा-

नां नानात्वैकत्वविज्ञानादेवेति "तथैवैकत्वनानात्वे सुखदुःखात्प्रमुच्यते" इति भगवतैव निरूपितम्।

ततश्च भगवता—तदव्यक्तस्वरूपम्, महदहङ्कारस्वरूपम्, भूतादिसृष्टिप्रकारः, सत्त्वादि गुणत्रयम्, तद्गुणकार्याणि, तत्तद्गुणवतामधिकारिणां लक्षणं तद्व्यवसायफलम्, गुणकर्मविभाक्ताश्चाधिकारिधर्माः, धर्मस्वरूपम्, मुमुक्षुधर्माः, मोक्षस्वरूपम्, ब्रह्मस्वरूपम्, ब्रह्मविभूतयः, क्षेत्रक्षेत्रज्ञलक्षणं चेत्यादि सर्वं श्रीगीतार्थोपब्रह्मणरूपैरुपाख्यानैश्च यथावच्च व्याख्यातं भवति। अथ चान्ततो हि भगवता ज्ञानभक्तिकर्मयोगनिष्ठानां चतुर्णां चाधिकारिणां यथाफलं व्यवसायश्चेत्थं प्रतिपादितो भवति—

"ज्ञानयोगमुपागम्य प्रसन्नमतयः सदा।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः॥"
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः।
आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम्॥
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः।
अहंकारसमायुक्तास्ते सकाशे प्रजापतेः॥
ध्यानयोगादुपागम्य निर्ममा निरहंकृताः।
अव्यक्तं प्रविशन्त्येव महतां लोकमुत्तमम्॥

इति। अत्र च सर्वेषामधिकारिणां त्रित्वैकत्वविज्ञानपूर्विका च निष्ठा तत्फलं च कथितं भवति। किं च ज्ञानभक्तिकर्मयोगनिष्ठानां

च चतुर्णामधिकारिणां यथाक्रमं 'हि परस्थानलक्षणं कैवल्यम्, ब्रह्मविभूतिः, प्राजापत्यलक्षणं स्वनियतसंसारव्यवसायाऽननुरूपसाधनदुष्टेन्द्रियविजृंभणविजयप्रदं कर्म च सन्यासगर्भम्, शुद्धात्मब्रह्मसामीप्यं च' फलत्वेनोक्तं भवति। एवमन्यैश्चाऽपि भगवद्वचनैः श्रीभगवद्गीतायाश्च तत्त्वव्याख्यान परयोगब्रह्मविद्यास्वरूपत्वं युक्तमेवेति समीचीनं वक्तुं शक्यत इति विज्ञेयम्। तथा चतुर्विंशद्गीतायां च श्रीभगवद्गीतायाम्, ये च वाऽर्थास्तदर्जुनायोपदिष्टाः, ते सर्वेऽपि तदनुगीदायामर्थतः शब्दतश्च समुदिताः सन्ति भगवता, इति विज्ञायते। ते च भगवद्गीतायास्तत्तदध्यायान्ते तदनुगीतोक्तार्थसमन्वयेन व्याख्याता भविष्यन्ति। इत्थं पुनर्भगवान्नारदश्चाह—

### नारदकारिकाः

इत्थं पुनश्च गीताया भगवत्या महर्षयः।
तद्योगब्रह्मविद्यात्वं विज्ञेयं शुद्धलक्षणम्॥ २५॥
प्रकृतावात्मयोगेन भवतां धर्मगामिनाम्।
चतुर्णां व्यवसायानां तृत्वैकत्वं सनातनम्॥ २६॥
सत्यं च नियतं विद्या या च शास्त्यधिकारिणः।
सा योगब्रह्मविद्येति कथ्यते पूर्वसूरिभिः॥ २७॥
व्याख्यात्री व्यवसायानां चात्मनो देहमण्डले।
या च विद्याऽस्ति सा प्रोक्ता गायत्रीति महर्षिभिः॥ २८॥

त्रयाणां व्यवसायानां ज्ञानादीनां च या भवेत् ।
व्याख्यात्री चैव विद्या सा गायत्री त्रिपदी भवेत् ॥ २९ ॥
या पुनश्चैव तेषां हि चैकत्वं शास्ति सा पुनः ।
गायत्री चतुष्पदीति कथ्यते योगलक्षणा ॥ ३० ॥
तस्माच्चतुष्पदी विद्या त्रित्वैकत्वप्रदर्शिनी ॥
सा योगब्रह्मविद्येति विज्ञेयं ह्यधिकारिभिः ॥ ३१ ॥
ज्ञानमिच्छा क्रिया चेति व्यवसायास्त्रयस्तथा ।
एकत्वलक्षणश्चैव व्यावसायश्च यौगिकः ॥ ३२ ॥
यतश्च भगवद्गीतावर्णिताः स्युर्विशेषतः ।
ततो योगब्रह्मविद्या गीता स्यादिति निर्णयः ॥ ३३ ॥
सत्यात्मशक्तिसंभूता व्यवसायाश्च सक्रमाः ।
ज्ञानमिच्छा क्रिया चेति कथिता ये च शाश्वताः ॥
तेषां हि सत्यदृष्ट्या तु विज्ञेयत्वमिहोच्यते ।
सत्ये चैव पुनस्तेषां ह्युपसंहारलक्षणः ॥ ३५ ॥
यश्च सोऽयं हि योगश्च भगवद्गीतयोच्यते ।
तस्माच्च भगवद्गीता योगब्रह्मस्वरूपिणी ॥ ३६ ॥
स्याद्योगब्रह्मविद्येति कथ्यते शुद्धयोगिभिः ।
ततो गीता भगवती विज्ञेयाऽस्त्यधिकारिभिः ॥ ३७ ॥"

इति । ये च वा ह्यस्माकं प्रकृतिमण्डले ज्ञानादिनामभिः व्यवह्रीयमाणाः, सत्यशुद्धात्मशक्तिसंभूताश्च परिदृश्यन्ते, तेषां

सत्यशुद्धात्मशक्तिमूलत्वमेव व्यवसायिभिः स्वव्यवसायाऽनुष्ठानसमये विज्ञेयम्। एवं स्वव्यवसायानां स्वभावनियतानां च त्रयाणां सत्यशुद्धात्मन्येव सशक्तिके च भवत्युपसंहारश्च शाश्वतः, इति तन्नारदवचनतात्पर्यार्थश्च विज्ञेयः। तथा चैवं भगवान्कुमारश्चाऽप्याह---

कुमारकारिकाः

चतुष्पद्याश्च गीताया वर्णितायाश्च तत्त्वतः।
इत्थं योगब्रह्मविद्यास्वरूपत्वं निगद्यते ॥ ७२ ॥

क्षेत्रक्षेत्रज्ञयोगाच्च सञ्जाता ये विशेषतः।
व्यवसायास्त्रयश्चैव कार्यकारणलक्षणाः ॥ ७३ ॥

तथा च व्यवसायानां त्रयाणां शुद्धलक्षणः।
योगश्च ब्रह्मदृष्टयायस्ते सर्वे च यथाक्रमम् ॥ ७४ ॥

भगवद्गीतया चैव व्याख्याताः स्युर्यतः स्वयम्।
तस्माद्योगब्रह्मविद्या सा भवेदिति निर्णयः ॥ ७५ ॥

किं च तद्व्यवसायानां चोक्तानां कारणात्मनाम्।
सति कार्यस्वरूपे च योगे यच्चाऽधिकारिभिः ॥ ७६ ॥

उपास्यते ब्रह्म शुद्धं सर्वमूलं सनातनम्।
अधिकृत्य हि तद्ब्रह्म योगमायोपबृंहितम् ॥ ७७ ॥

विज्ञेयं शास्ति या विद्या तत्त्वं ब्रह्मैकसंश्रयम्।
सा योगब्रह्मविद्येति प्रोच्यते शुद्धयोगिभिः ॥ ७८ ॥

तस्माद्योगब्रह्मविद्या गीता भगवतोदिता ।
अध्येया योगिभिश्चेति सिद्धान्तः शुद्धसंमतः ॥ ७९ ॥

इति । तस्मादेवमुपपादितनारदाद्याचार्यवचनैस्तन्महाभारताऽनुगीतावचनैश्च तदस्याः श्रीभगवद्गीताया योगब्रह्मविद्यास्वरूपत्वं शुद्धाधिकारिवेद्यत्वं च भवति समञ्जसम् ।

---

## (२) अथ श्रीभगवद्गीतायाः नरनारायणधर्मगीतादिचतुर्विंशद्गीतात्वसमर्थनम्।

---

अत एव हि योगब्रह्मविद्यास्वरूपाया श्रीभगवद्गीताया-गायत्रीलक्षणायाश्च नरनारायणधर्मगीतादिचतुर्विंशद्गीतात्मिकत्व-मवगम्यते । तथा हि—

"एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥
एको वशी निष्क्रियाणां बहूना-
मेकं बीजं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाऽभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥
यो ब्रह्माणं विदधातिपूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये" ॥

इति, "आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "ब्रह्मविदाप्नोति परम्" सोऽश्नुतेसर्वान्कामान्सह ब्रह्मणा विपश्चिता" इत्यादिश्रुतिभ्यश्च 'ब्रह्मस्वरूपात्मविज्ञानिनामेव वर्तमानसंसारव्यवसायसमाप्तिपूर्विका पञ्चमपरमपुरुषार्थ-ब्रह्मसामीप्यस्वरूपा च परप्राप्तिर्हि संभवेत्, इति विज्ञायते। एवं तद्ब्रह्मविज्ञानं च सर्वेषामधिकारिणां ह्यात्मभोगायतने च शरीर एव समभिजायते। अत एव—

अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमाश्रितम् ।
यः पश्येत्परमात्मानं बन्धनैः स विमुच्यते ॥
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
वसत्येको महावीर्यो नानाभावसमन्वितः ॥

नवद्वारं पुरं गत्वा स्थितोऽसौ नियतो वशी ।
ईश्वरः सर्वलोकेषु स्थावरस्य चरस्य च ॥ ”

इति, महाभारतवचनाच्छरीरस्य परमपुरुषार्थप्रापकब्रह्मविज्ञान-संपादनकार्याऽधिष्ठानस्वरूपत्वमभिवर्णितं दृश्यते । तत एव हि ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति” इति भगवदुपदिष्टा शरणागतिश्चापि हार्देश्वरविषयैवेति हि विज्ञायते । एवम् “ब्रह्माण्डेऽस्मिंश्च ये लोकाः, ये च तल्लोकाधिपतयः, ये च तल्लोकाधिपतीनामवताराः, ये च तदधिकारिणो देवा महात्मानो महर्षयः तत्तदधिकारिभिरुपास्यत्वेनाऽभिवर्णिताः, ते सर्वेऽपि प्रथमं स्वात्मस्वरूपत्वेनैव यथाविधि समुपास्या भवेयुरिति, तेषां संस्थितिश्च शरीर एवाऽस्माकमिति च विज्ञायते । ततो यथा वा हि ब्रह्माण्डं चतुर्दशभुवनं नानाविधचेतनाऽचेतनात्मकं च, तथैव हि शरीरमस्मदादीनामिति विज्ञायते । अतो ब्रह्मणः सशक्तिकस्य स्थूलरूपं भवति शरीरमष्टतत्त्वात्मकम्” इति भगवान्भार्गवः । अत एव—

“वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव च ॥
नाभ्यां समुद्रश्च विभुर्नखरोम तथैव च ।
वनस्पतिर्वनौषध्यस्त्वङ्गेषु मरुतस्तथा ॥
संवत्सराः पर्वसु च ह्याकाशे दैवमानुषे ।
उदाने विद्युदभवद्व्याने पर्जन्य एव च ॥

10

स्तनयोरेव चाकाशं बले चेन्द्रस्तथैव च ।
मनसोऽप्यथ चेशानस्त्वपाने रुद्र एव च ॥
गन्धर्वाप्सरसो व्याने सत्ये मित्रश्च शङ्कर ।
प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ॥
शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिन्दम ॥
मूर्ध्नि चैव दिशः प्राहुर्बुद्धौ ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्ठः स्यादधिष्ठाता तु शङ्करः ॥
अबुद्धश्चाऽभवत्तस्माद्बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो वेद वेदेषु शङ्कर ॥
यदाश्रितानि देहेषु दैवतानि पृथक्पृथक् ।
योऽग्नये जायते नित्यमात्मयाजी समाहितः ॥
य एवमनुपश्येत दैवतानि समाहितः ।
सोऽत्र योगी भवत्येव य एवमनुपश्यति ॥"

इति, महाभारते यथातत्त्वं शरीर एव सर्वेषां देवानां संस्थितिश्च भगवत्कुमाराभिवर्णिता हि भवति । अत एवेत्थम्—

"ब्रह्माण्डे चैव महति ये च लोकाश्चतुर्दश ।
ब्रह्मप्रतिनिधिर्देवः परमात्मा जगत्पतिः ॥
तदंशा ह्यवताराश्च तदीयाश्चाधिकारिणः ।
अन्ये देवाश्च तीर्थानि यथा सन्ति यथाक्रमम् ॥

तथा तान्यपि सर्वाणि चाऽस्माकं देहमण्डले ।
प्रत्येकं च भवन्तीति वदन्ति श्रुतयोऽनघाः ॥

तत्त्वज्ञा योगिनः सर्वे ह्युपसंहारवर्त्मना ।
अन्तः शरीरेष्वस्माकं शास्तारं परमेश्वरम् ॥

ब्रह्मप्रतिनिधिं चैव संसारेऽस्मिन्यथाविधि ।
समुपास्य विशुद्धान्तःकरणाः शुद्धमायया ॥

वैकुण्ठं चैव कैलासं तदीशानधिकारिणः ।
लोकान्तरगतान्देवान्प्राणिनः पशुपक्षिणः ॥

शुद्धात्मनियते शुद्धे मानसे च यथामति ।
यथाशक्ति च पश्यन्ति यथेच्छं सन्ति तन्मयाः ॥

वर्षवाताऽऽतपसहा धीराश्चैव चिरं मुने ।
यथा वल्मीकजन्माद्या दृश्यन्ते मुनयो भुवि ॥

तस्मात्प्रपञ्चो नित्यः स्याद्ब्रह्मोपास्तिसुसाधनम् ।
नानारूपस्वभावाच्च सोऽनित्य इति निर्णयः ॥"

इति, योगरहस्ये शरीरस्य महिमा ह्यभिवर्णितो भवति । अत एव हि शरीरमेतच्च क्षेत्रसंज्ञकम्, तदधिष्ठितो ह्यात्मैव क्षेत्रज्ञ-संज्ञकः, तयोरधिकारिभिर्विज्ञेयत्वम्, चैवम्—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥

क्षेत्रज्ञं चाऽपि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥"

इति, श्रीभगवद्गीतायामेकविंशाध्याये प्रतिपादितं भवति। एवमनुगीतायामपि तत्क्षेत्रक्षेत्रज्ञयोः स्वरूपं, तत्संयोगवियोगप्रकाराः, तेषां चाऽधिकारिभिर्विज्ञेयत्वं हि प्रतिपादितम्। यथा—

"अतः परं प्रवक्ष्यामि तत्त्वक्षेत्रज्ञयोर्यथा।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः॥
विषयो विषयित्वं च संबन्धोऽयमिहोच्यते।
विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः॥
व्याख्यातं पूर्वकल्पेन मशकोदुंबरं यथा।
भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम्॥
यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते।
अनित्यं द्वंद्वसंयुक्तं सत्त्वमाहुर्मनीषिणः॥
निर्द्वंद्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः।
समः संज्ञानुगश्चैव न सर्वत्र व्यवस्थितः॥
न सज्जते सदा सत्त्वं ह्यापः पुष्करपर्णवत्।
सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते॥
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः।
एवमेवाऽप्यसंयुक्तः पुरुषः स्यान्न संशयः॥"

इति। एवमभिवर्णितं शरीरमेतच्चैव—आत्माऽधिकरणत्वेन प्रकृति-रिति, आत्मनः संसरणोपयोगित्वेन संसार इति, आत्मनो व्यवसायोपयोगित्वेन क्षेत्रमिति, तस्यैकस्यैवाऽऽत्मनः पञ्चधा प्रकाशकत्वेन पञ्चकोशात्मकमिति, सन्निहितसंसारेश्वराऽऽवास्य-त्वेन नवद्वारं पुरमिति, आत्मनो विशेषणत्वेन चतुर्विंशत्तत्त्वात्म-कमिति, अनियतस्वभावाच्च त्रिगुणात्मकमिति, तत्तज्जगद्बीज-जनकत्वेन चाऽऽदिवृक्ष इति, आत्मस्वरूपभेदकत्वेनाऽवस्था-चतुष्टयात्मकमिति, परप्राप्तिनायकत्वेन रथ इति, तपोयोग्यत्वेन वनमिति, सर्वनाशकत्वेन कालचक्रमिति, एवमन्यैरप्यन्वर्थना-मभिश्च यथासंसारव्यवसायं ह्यधिकारिभिर्व्यवह्रीयते। तत एव हि शरीरमेतदधिकृत्य सर्वेषामधिकारिणामूर्ध्वगमनाय त्याज्योपा-देयार्थविज्ञानप्रवचनपराणि सर्वाणि दर्शनानि, विद्याश्च सर्वा अपि, लोकाऽनुग्रहपरैरधिकारिभिर्महर्षिभिश्च संप्रदर्शितानि भवन्ती-त्यन्यत्र विस्तरः। अत एव हि शरीरस्य "शरीरमाद्यं खलु धर्मसाधनम्" इति धर्मकार्याधिष्ठानस्वरूपत्वेन धर्मसाधनत्वं समुपपादितं भवति पूर्वाचार्यैः। तस्मात्सर्वैरधिकारिभिश्च तदात्म-भोगायतनं हि शरीरं मुख्यं विज्ञेयमस्तीति शुद्धसिद्धान्तः।

तदिदं व्याख्यातं च शरीरं पुनरव्यक्तकार्याणां पृथिव्या-दिमहाभूतादीनां च तत्त्वानां समवायं हि भवति। तच्च चतुर्विं-शत्तत्त्वात्मकमिति निष्कर्षः। श्रीभगवद्गीतायामेकविंशेऽध्याये

हि तत्क्षेत्राऽवयवानां क्षेत्रारंभकानां च तत्त्वानां स्वरूपं च परिगणितमुच्यते भगवता, येषां पुनर्विज्ञानाच्च मुमुक्षुभिः परप्रेप्सुभिश्चाधिकारिभिरात्मभावो ह्युपलभ्यते। यथा वा हि—

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥"

इति। अत्र पूर्वश्लोकेन चतुर्विंशतितत्त्वानि, द्वितीयेन च तत्तत्त्वजायमानाश्च ज्ञानाद्या व्यवसाया भवन्ति कथिताः। एवमुपपादितानां च तत्त्वानां प्रभवाऽप्ययविज्ञानस्य श्रैष्ठ्यम्, तेषां स्वरूपम्, क्षेत्रस्वरूपम्, क्षेत्रज्ञसंज्ञकस्य परमात्मनः स्वरूपम्, क्षेत्रादिविज्ञानफलं चेत्यादि सर्वं रथदृष्टान्तेन चाऽनुगीतायामित्थम्—

"भूतानामथ पञ्चानां ह्यथैषामीश्वरं मनः।
नियमे च विसर्गे च भूतानां मन एव च॥
अधिष्ठातृमनो नित्यं भूतानां महतां तथा।
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञश्च स उच्यते॥
इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा॥

महदश्वसमायुक्तं बुद्धिसंयमनं रथम्।
समारुह्य स भूतात्मा समन्तात्परिधावति ॥
इन्द्रियग्रामसंयुक्तो मनः सारथिरेव च।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ॥
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम्।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥"

इत्यभिवर्णितं भवति। अत एव हि गीतायाम् "क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम" इति भगवतैव तदुक्तज्ञानस्य प्राशस्त्यं चोच्यते। तस्मादेवमभिवर्णितक्षेत्रक्षेत्रज्ञतत्संयोगवियोगप्रकाराश्च तत्तदधिकारिभिर्यथासंसारव्यवसायं विज्ञेया इति सिद्धान्तः।

अथ क्षेत्राऽऽरंभकानां च तत्त्वानां यथाव्यवसायं विभागाः संभवन्ति चत्वारः, इति सिद्धान्तः। ततश्चैवं तत्त्वारब्धे च क्षेत्रे, सति च तदात्मनो योगे 'ज्ञानमिच्छा क्रिया, इति प्रसिद्धाः, प्रवृत्तिपराश्च त्रयो व्यवसायाः, वियोगे च निवृत्तिपरस्तुरीयो योगव्यवसायश्च, संभवन्ति। ते चैव पुनः 'इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः, इति, क्षेत्रविकारस्वरूपत्वेन गीतायामभिहिताः स्युर्भगवता। अत्र च चेतना इत्यनेन ज्ञानव्यवसायश्च गृह्यते, तस्याः प्रथमात्मलक्षणत्वात्। एवमिच्छादिभिश्चतुर्भिश्च केवलमिच्छैव संङ्कल्परूपा चाभिधीयते। द्वेषादिकं तु तत्कार्यमिति विज्ञेयम्। तथा संघात इत्यनेन लक्षणया च भूतेन्द्रियसंघातकार्यं च कर्म ह्यभिहितं

भवति। एवं धृतिरित्यनेन योगव्यवसायश्चाऽभिधीयते, तस्याः ज्ञानसङ्कल्पकर्मणां धारकत्वाद्योगसमनियतत्वाच्च। तथा चोक्तं भगवता—

"धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः।
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥"

इति। तस्मात् 'इच्छा द्वेषः, इत्यादिभिश्चाभिवर्णिताश्चत्वारश्चात्मनो व्यवसायाः कथिता इति युक्तमेव। यद्यपि वासिष्ठाद्याचार्यास्तु क्षेत्रे तदात्मनो व्यवसायस्य चानन्तत्वं समामनन्ति, तथापि तत्त्वदृष्ट्या तद्व्यवसायस्य निर्णेयत्वाच्चत्वारो व्यवसाया इति हि शुद्धदर्शनसिद्धान्तः। न च प्रकृतिः, विकृतिः, प्रकृतिविकृतिः, इति च तत्त्वानां त्रयश्चापि विभागाः संभवन्ति, ततो क्षेत्रज्ञस्या ऽऽत्मनो व्यवसाया अपि त्रय एव संभवन्तीति वाच्यम्, तत्त्वानां तथा विभागे सत्यपि तदात्मनो व्यवसायस्य चतुष्टयत्वे च बाधकाभावात्। किं च तत्त्वानां प्रकृत्यादित्रिविधधर्मभेदेऽपि तेषु सूत्रात्मस्वरूपत्वेनाऽवस्थितस्य पुरुषस्य स्वरूपमपि तुरीयं भवति, ततश्चातुर्विध्यमपि युक्तम्। न च प्रकृतेः परत्वमेव पुरुषस्याऽस्तीति वाच्यम्, तस्य संसारदृष्ट्या हि तत्त्वात्मिक-प्रकृतिमण्डलाऽधिष्ठितत्वस्य सर्वैरप्यङ्गीकृतत्वात्। अत एव तत्त्वानां महापुरुषसंमितत्वमित्थमुक्तं महाभारतानुशासनपर्वणि—

"अव्यक्तं बुद्ध्यहंकारौ महाभूतानि पञ्च च ।
मनस्तथा विशेषाश्च दश चैवेन्द्रियाणि च ॥
एतास्तत्त्वचतुर्विंशन्महापुरुषसंमिताः ।
बुद्ध्यमानेन देवेन चेतनेन महात्मना ॥
संयोगमेतयोर्नित्यमाहुरव्यक्तपुंसयोः ।
एकत्वं च बहुत्वं च सर्गप्रलयकोटिशः ॥"

इति। अत्र महापुरुषशब्देन चतुष्पात्परमात्मा ह्यभिधीयते। तस्मात्तत्त्वानां सामान्यतो विभागाश्चत्वारः पादलक्षणाः, तथा यथाविभागं च ज्ञानाद्या व्यवसायाश्च भवन्तीति शुद्धार्यसिद्धान्तः।

तेषु च तदिन्द्रियकार्यः कर्मव्यवसायश्च परो भवति। अत एव भगवता च 'समुपपादितानां तत्त्वानां क्षेत्रज्ञदृष्ट्या हि यथासंसारव्यवसायं विभागः तेषां क्रमश्च, इत्थमुपदिश्यते श्रीभगवद्गीतायां शिक्षाध्याये च पञ्चमे—

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥"

इति। अत्र च 'इन्द्रियाणि' इत्यनेन पञ्चमहाभूतानुषक्तान्येव तानि गृह्यन्ते, तेषामेवाऽधिकारलक्षणकर्मसाधनत्वेन प्रथमतः परत्वस्य सिद्धत्वात्। ततश्चेन्द्रियैर्दशभिरेव ह्युपक्रमदशायां कर्माणि प्रवर्तन्ते। एवमुपसंहारदशायामपि कर्मनाशश्च तदिन्द्रियविरामादेवेति प्रत्यक्षतोऽवगम्यते। न च कर्मेन्द्रियाणां च

पञ्चानां तथात्वेऽपि ज्ञानेन्द्रियाणामतथात्वात्सामान्यतो न तेषां कर्मसाधनत्वमिति वाच्यम्, विना च ज्ञानेन्द्रियाणि तेषां कर्मेन्द्रियाणां पुष्कलकर्मसाधनत्वाऽयोगात्। तत एव 'इन्द्रियाणी' इति तेषां सर्वेषां सामान्यतो निर्देशः। न च ज्ञानेन्द्रियकार्येषु कर्मेन्द्रियापेक्षा चाप्यस्तीति वाच्यम्' विना च कर्मेन्द्रियाणि ज्ञानेन्द्रियकार्यस्य सर्वैरप्यनुभूयमानत्वात्। न तथा भवन्ति कर्मेन्द्रियाणि। न चैवं मनसोऽपीन्द्रियत्वेन कर्मसाधनत्वेन च तदेकादशानामपि तेषां कर्मसाधनत्वमस्त्विति वाच्यम्, मनसस्तथात्वेऽपि तेभ्यो विलक्षणत्वाद्भिन्नव्यवसायवत्त्वाच्च तस्य साक्षात्कर्मसाधनत्वाऽयोगात्। अत एव तत्त्वव्याख्यानपरशास्त्रेषु, 'इन्द्रियाणि, मनः, बुद्धिः, अव्यक्तम्' इति तत्त्वानां चत्वारो विभागाः, तद्विज्ञानफलं च विशिष्य समुपपादितं भवति, इति प्राचीनार्यैश्च व्याख्यातम्। तस्मादत्रेन्द्रियाणीत्यनेन क्षेत्रज्ञस्यात्मनो ह्युपक्रमपरस्य कर्म च संसारस्वरूपं संप्रतिपादितं भवतीति विज्ञेयम्।

एवमिन्द्रियेभ्योऽप्यस्ति परं मनः। तस्य च सङ्कल्पविकल्पाद्यात्मकतया तदुपपादितकर्मभिन्नव्यवसायवत्तया तत्कर्मसाधनेन्द्रियनायकतया च परत्वमुच्यते। तदुक्तमनुशासनपर्वणि महाभारते—

"इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते।
प्रार्थनालक्षणं तच्च इन्द्रियं तु मनः स्मृतम्॥"

इति। यद्यपि महाभारतादौ केवलस्य चाऽहंकारस्य तादृशजगन्मूलत्वमुच्यते, तथापि तथा कथनं मनस्संयुक्तस्यैव तस्येति विज्ञेयम्। अत एव ब्रह्मणश्चाऽपि 'बहुस्याम्' इति बहुभवनसङ्कल्पाधिकरणं च मन इत्यवगम्यते श्रुतिभिः। तत एव च तदहंकारस्य भूतेन्द्रियजन्महेतुत्वकथनेऽपि मनस एव धारकत्वं नियन्तृत्वं च तदनुगीतायामित्थं भगवता प्रतिपादितं भवति—

"इन्द्रियाणीद्रियार्थाश्च महाभूतानि पञ्च च।
सर्वाण्येतानि सन्धाय मनसा संप्रधारयेत्॥"

इति। अत एव हि श्रीभगवद्गीतायाम् "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च" इत्यादिना चाष्टमहाप्रकृतिषु तदहंकारवन्मनसश्चाऽपि स्वतन्त्रत्वेन मुख्यत्वमुच्यते। तस्मादत्र 'परं मनः, इत्यनेन क्षेत्रज्ञस्य च तस्य, तदिच्छाव्यवसायश्च तत्कर्मणः पर इत्यवगम्यते।

एवं भवति मनसः परं च बुद्धितत्त्वम्। तच्च महत्तत्त्वमेवेति तत्त्वकोशादाववगम्यते। तदुक्तं महाभारतेऽनुगीतायाम्—

"अव्यक्तात्पूर्वमुत्पन्नो महानात्मा महामतिः।
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते॥

महानात्मा मतिर्विष्णुर्जिष्णुः शंभुश्च वीर्यवान्।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः॥

पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
तं जानन्ब्राह्मणो विद्वान्प्रमोहं नाऽधिगच्छति ॥"

इति । अत्र गुणानामित्यनेन तदुपहितानि तत्त्वानि लक्ष्यन्ते । प्रथमः सर्गः, इत्यनेन ज्ञानव्यवसायश्चात्मनः क्षेत्रज्ञस्य प्रथमः कथ्यते । महत्तत्त्ववाचकाः शब्दाश्च, 'महानात्मा, इत्यादिना परिगणिता भवन्ति, इति विज्ञायते । तस्मात् 'मनसस्तु परा बुद्धिः' इत्यनेन तदिच्छाव्यवसायात्परो भवति ज्ञानव्यवसाय इति विज्ञेयम् । अत्र च क्षेत्रज्ञस्याऽऽत्मनो ह्युपसंहारदृष्टचैव-'इन्द्रियाणि पराण्याहुः' इत्याद्युक्तम् । परं तु तस्योपक्रमदृष्ट्या-'ज्ञानं मनः इन्द्रियाणि' इति विज्ञेयम् । ततश्च-प्रथमो ज्ञानसंसारः, द्वितीयश्चेच्छासंसारः, तृतीयः कर्मसंसारः, इति तदुपक्रमपरस्यात्मनः क्षेत्रज्ञस्य संसारास्त्रयः संभवन्ति । एवं व्याख्यातसंसारत्रयमधिकृत्यैव हि, यथादेशं यथाधिकारं यथाकार्यं च दर्शनान्यनेकानि समुद्भूतानि संप्रवर्तन्ते ।

इत्थमुपपादितसंसारत्रयात्परो भवति सोऽयमात्मा तुरीयः । स च शुद्धाऽव्यक्तमण्डलं च तुरीयमधितिष्ठति परमात्मस्वरूपो योगिनामनुग्रहायेति विज्ञेयम् । किं च सोऽयमेव परमात्मा शुद्धाव्यक्तमण्डलमपि स्वेच्छया परित्यजन्विशुद्धः पुरुषो विराजत इत्यपि श्रूयते । ततः परं च समुपास्यं ब्रह्मस्वरूपम् "नेतिनेत्यन्तम्" इत्यभिधेयं भवति । तदुक्तं श्रुतिभिश्चान्याभिः—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥"

इति । तस्मादेवमभिवर्णितशुद्धाऽव्यक्तगतः परमात्मस्वरूपस्याऽऽत्मनो दृष्ट्या हि, तुरीयो योगसंसारश्च त्रित्वैकत्वरूपः कथितो भवति । अत्रेदमवधेयम्—शक्तेः स्वरूपं च ब्रह्मणो भवत्यात्मसंज्ञकम्, यां हि समाश्रित्य ब्रह्मणः पुरुषादिस्वरूपपञ्चकात्मकस्य च 'बहुस्यामिति' सङ्कल्पः । ब्रह्मशक्तेश्च तस्या योगदेव्या ह्यालंबनस्थानं च भवत्यव्यक्तम् । तदपि ब्रह्मस्वरूपमेव, तस्य च तच्छक्तेरधिकारणत्वात् । तदेवालंबनं भवति शक्तेश्च । एवं परमात्मनस्तदधिकारपुरुषाणां च महात्मनां तादृशी या च देवी मायाख्या ब्रह्मशक्तिः, तस्याश्चाधिष्ठानं भवत्यात्मस्वरूपमव्यक्तम् । तथा ह्यवतारपुरुषाणां च ब्रह्मांशानां या ह्येषाख्या माया ब्रह्मशक्तिः, तस्याश्चाप्यधिष्ठानं भवति तादृशमात्मस्वरूपमव्यक्तम् । इत्थं च संसारिणामस्माकं व्यवसायनायिका या च माया गुणमयीनाम्नी ब्रह्मशक्तिः, तस्याऽधिष्ठानमव्यक्तं भवत्यात्मस्वरूपम् । "मायाधिष्ठानमव्यक्तम्" इति तु लक्षणं भवति सामान्यमेव, पञ्चानां च पुरुषादीनां ब्रह्मस्वरूपाणां तदधिकारपुरुषाणां च यथासंसारम्, यथाधिकारम्, यथाकार्यं च तदव्यक्तभेदस्य

नियमेन वक्तव्यत्वात्। तस्मादव्यक्तं सर्वाधिकारिसमुपास्यमानं च सशक्तिकब्रह्मस्वरूपमिति सिद्धान्तः। तदव्यक्तं च सर्वत्र द्विविधमवगम्यते शुद्धमशुद्धमिति। शुद्धं च पुनस्तत्र 'समोऽहमेकोहम्' इत्यादिसङ्कल्पोपबृंहितं योगशक्त्युपबृंहितं त्रितयात्मकप्रपञ्चोपशममद्वितीयं विज्ञानघनमाकाशवदमलस्वरूपेण सर्वत्र व्याप्तमपरिच्छेद्यं तद्योगिसेव्यं च भवति। तदन्यदशुद्धं भवत्यव्यक्तम्। तच्च द्विविधम्, प्रवृत्तिपरं निवृत्तिपरं चेति। मुमुक्षूणामधिकारिणां यथास्वरूपं मायाधिष्ठानं भवत्यव्यक्तमात्मस्वरूपं निवृत्तिपरम्। प्रवृत्तानां च संसारिणां मायाधिष्ठानं त्रितयात्मकजगद्बीजमिन्द्रियगोचरं च भवत्यात्मस्वरूपमव्यक्तं प्रवृत्तिपरम्। त इमे चाव्यक्तस्वरूपे ह्यक्षरगीताध्याये च षोडशे विविच्य व्याख्याते भवतः। यश्च पुनरानन्दकोशविलसद्दिव्यमङ्गळविग्रहश्च पञ्चमः पुरुषः, स च शुद्धस्वभावाच्च स्वपरमात्मस्वरूपाद्विलक्षणः स्वप्रत्यग्ज्योतिष्येव ब्रह्मस्वरूपे च विहरन्विशुद्धसत्त्वश्च देवीप्रकृतिभावितैर्महात्मभिरनन्यभावनया हि समुपास्यते, इति। अन्यच्चात्र वक्तव्यं सर्वमप्यग्रे वक्ष्यते।

ततश्चैवं तत्त्वानां सामान्यतश्चतुर्धा विभागेन तदात्मनः क्षेत्रज्ञस्य व्यवसायाश्चत्वारश्च पूर्वोक्ताः समुदिता भवन्ति' इति विज्ञायते। किंच पुनस्तेषामभ्युदयात्मकत्वेन धर्म इति व्यवहारश्च शास्त्रेषु दृश्यते। इत्थं प्राचीनार्यैस्तेषां चतुर्णां च व्यवसायानां स्वरूपं

व्याख्यातं भवति—“शुद्धाऽव्यक्तगतेरात्मनश्च परमात्मस्वरूपस्य भवति तुरीयो व्यवसायो योगाख्यश्चैकरूपः, बुद्धिगतेस्तस्य ज्ञानव्यवसायश्च प्रथमः सर्वव्यवसायहेतुः, मनोगतेश्च तस्य सङ्कल्पादिमूलो भक्तिपरो व्यवसायश्च द्वितीयः प्रार्थनालक्षणः, महाभूतोपहितेन्द्रियगतेश्च तस्य सर्वाधिकारलक्षणकर्मव्यवसायश्च तृतीयः, अहंकारश्च सर्वेषु तत्त्वेषु प्रधानतो मनसि चाऽभिव्याप्तस्तिष्ठति” इति। व्यवसायानिमानधिकृत्यैव योगशक्तिर्ज्ञानशक्तिरिच्छाशक्तिः कर्मशक्तिश्चेति तदात्मनः संसारपरस्य शक्तयश्च वर्ण्यन्ते। एवमभिवर्णितैरेव चतुर्भिर्व्यवसायैश्च जगत्सर्वमपि स्थूलसूक्ष्मरूपं क्षेत्रपदवाच्यं चाभिव्याप्तं सन्दृश्यते। तदुक्तं भारतानुशासनपर्वणि भगवता सनत्कुमारेण—

“विज्ञानसङ्कल्पविकल्पकर्मभि-
धर्मैः प्रवृत्त्योपहितैर्यथा त्रिभिः।
तथा हि योगेन तुरीयधर्मणा
क्षेत्रोऽयमात्मा विहरत्यजः शुचिः॥”

इति। तत एवेत्थमस्य क्षेत्रज्ञस्याऽऽत्मनो व्यवसायपरस्य यो धर्मः, तस्य तत्प्रवचनपराणां विद्यानां तदधिकारिणां चाऽपि चातुर्विध्यमुच्यते भगवता वासुदेवेनाऽनुगीतायाम्—

“चातुर्विध्यं तथा धर्मांश्चातुराश्रमिकान्पृथक्।
येन विद्यामविद्यां च विन्दन्ति यतिसत्तमाः॥

सैषा त्रयी परा विद्या चतुर्थ्यान्वीक्षकी स्मृता।
यां बुध्यमानो बुध्येत बुध्याऽऽत्मनि समं गतः ॥"

इति। अत्र हि विद्याशब्देन सा योगब्रह्मविद्यास्वरूपा च महाविद्याऽभिधीयते, यस्याश्च विज्ञानेन हि यतयोऽविद्याख्यामपरां विद्याख्यां परां च विद्यां विजानन्ति। या हि पुनरपरा विद्यागायत्रीलक्षणा त्रिपदा च, सा हि तदात्मनः क्षेत्रज्ञस्य क्षेत्रपरं व्यवसायत्रयं च ज्ञानभक्तिकर्मरूपमावेदयति। या तु पुनः परा विद्या, तया हि तदात्मनः स्वपरो योगख्यस्तुरीयव्यवसायश्चैकरूपः कथ्यत इतिविवेकः। एवमुक्ताया ह्यपरायाः परायाश्च विद्यायाः क्रमेण 'त्रयी, आन्वीक्षकी' इति च संज्ञा इत्यत्रोच्यते। "सहि धर्म सुपर्याप्तो ब्रह्मणः पदवेदने" इति भगवताऽनुगीतायां च यो धर्मः प्रथमं हि व्याख्यातः, स एवात्र महाविद्याशब्दार्थ इति विज्ञेयः। धर्मस्याऽस्य पर्याप्तत्वं च त्रित्वैकत्वबोधकस्वरूपत्वमेव। तच्च हि विद्याऽविद्ययोश्चैककण्ठ्येनाऽर्थबोधकत्वमेव। ततो महाविद्यायास्त्रिभिः पादैश्च क्षेत्रक्षेत्रज्ञयोगजास्त्रयो धर्माः संप्रबुद्धा भवन्ति; तुरीयपादेन च क्षेत्रक्षेत्रज्ञवियोगजो निर्वाणपरस्तुरीयो योगधर्मश्चैकरूपः सर्वधर्ममूलः सनातनः समवगतो भवति, इति विज्ञेयम्। तस्मादेव "इन्द्रियाणि" इत्याद्युक्तभगवद्वचनैश्च तत्वानां चत्वारो विभागाः, तत्त्वसमारब्धे च क्षेत्रे तदात्मयोगवियोगाभ्यां सक्रमाश्चत्वारो व्यवसायाश्च धर्मपदवाच्याः संभवन्ति, इति भवति शुद्धार्यसिद्धान्तः।

एवं यथातत्त्वविभागं चाऽभिवर्णितानां चतुर्णां च व्यवसायानां प्रत्येकं षड्ढ्धर्माश्च तत्तद्विभागानुरूपाः संभवन्तीति च विज्ञायते। तथा हि—महत्तत्त्वं हि प्रथमव्यवसायाऽधिकरणत्वेन तत्त्वानां प्रथमं भवति। तदेवाऽवलंब्य भगवांश्च क्षेत्रज्ञः स्वव्यवसायं च ज्ञानपरमाचरत्याचारयति च। अतश्च तत्त्वविभागेषु प्रथमो विभागश्च तन्महत्तत्त्वमेवाऽधिकृत्य कथित इति विज्ञायते। यद्यपि साहंकारमव्यक्तमूलं महत्तत्त्वमेवाऽधिष्ठाय सोऽयमात्मा च क्षेत्रज्ञः प्रथमव्यवसायमाचरति, न केवलं तन्महत्तत्त्वमवलंब्य प्रथमव्यवसायमातनोतीति वक्तुं युक्तम्; तथाऽपि प्रथमे च तदात्मनो व्यवसाये नियन्तृत्वेन तदधिष्ठानस्वरूपत्वेन च मुख्यत्वं तन्महत्तत्त्वस्य भवतीति महाभारतवचनादवगम्यते। तथा हि—

"अव्यक्तादेक एवैष महानात्मा प्रसूयते।
अहंकारेण संयुक्तो लोकान्व्याप्याऽधितिष्ठति॥
तत्कार्यं कारणं च स्यान्महत्तत्त्वं महेश्वर।
अधिष्ठाय विशुद्धं च ह्यहंकारं तदेव हि॥
कुरुते सर्वलोकांश्च व्यक्तांश्चैव विशेषतः।
अतो महत्तत्त्वकार्ये ह्यहंकारो विशिष्यते॥
अहंकारेण ते लेका व्याप्ताश्च व्यवसायिनः।
प्रवृत्तौ दक्षिणमुखो निवृत्तौ चोत्तराननः॥

महता सह संयोगं सोऽयं प्राप्य तदात्मनः।
प्रथमं व्यवसायं च तथाऽन्यांश्च करोति च ॥

अहंकारेण भूतानां सर्गो नानाविधो भवेत्।
अहंकारनिवृत्तिर्हि निर्वाणायोपपद्यते ॥"

इति। तस्मान्महत्तत्त्वं दक्षिणमुखाऽहंकारसंयुक्तं तदात्मनः क्षेत्रज्ञस्य प्रथमव्यवसायाऽधिकरणं भवतीति विज्ञायते। एवं यथातत्त्वविभागं विभक्तेषु च सर्वेषु व्यवसायेषु तदहंकारस्यैव गुणरूपत्वमित्थम्—

"तत्र प्रधानमव्यक्तं ह्यव्यक्तस्य गुणो महान्।
महत्प्रधानभूतस्य गुणोऽहंकार उच्यते ॥"

इत्यनुगीतायां भगवदुक्तोपाख्याने प्रतिपादितं भवति। अत्र हि-अव्यक्तं च यदा प्रधानभूतम्, तदा महत्तत्त्वं च भवति गुणभूतम्। एवं महत्तत्त्वं च यदा प्रधानभूतम्, तदा तदहंकारश्च तद्गुणभूतो भवति, इति विज्ञायते। तथा च महत्तत्त्वे यश्च व्यवसायो ज्ञानपरः, स च गुणभूतेनाऽहंकारेण युक्त एव भवतीति विज्ञायते। अत एव—

"बीजधर्मं यथाऽव्यक्तं तथैव प्रसवात्मकम्।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥

बीजधर्मात्साहंकारात्प्रसवश्च पुनः पुनः।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥"

इत्युनुगीतायां चोपदिश्यते भगवता। अत्र हि—तत्त्वानां निवृत्त्यनुरूपव्यवसायपरत्वे बीजस्वरूपत्वम्, तेषां च प्रवृत्त्यनुरूपव्यवसायपरत्वे प्रसवस्वरूपत्वम्, इत्युक्तमिति विज्ञायते। यदा हि महत्तत्त्वं निवृत्तिपरोपसंहारमुखं बीजस्वरूपं च भवति, तदा न तस्य महत्तत्त्वस्य तदहंकारतत्त्वाऽभियोगः संभवति। किं चात्र बीजरूपमित्यनेन कारणात्मकम्, प्रसवरूपमित्यनेन कार्यात्मकं च तद्गृह्यते, इति विवेकः। अत एव—

"अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान्।
महाहंकारविटपश्चेन्द्रियान्तरकोटरः॥
महाभूतविशेषश्च विशेषप्रतिशाखवान्।
सदा पर्णः सदा पुष्पः शुभाऽशुभफलोदयः॥
आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः।
ब्रह्मबीजप्रभावज्ञो यः पुमान्स परो भवेत्॥

इत्यनुगीतायां च भगवतोपदिश्यते। अत्र हि 'महतः स्कन्धरूपत्वेन, अहंकारस्य विटपस्वरूपत्वेन च, अभिवर्णनात्, विटपैश्च स्कन्धविस्फूर्तिरिव, तदहंकारेण महत्तत्त्वविस्फूर्तिश्च स्यात्, इत्युक्तमिति विज्ञायते। किं च 'ब्रह्मबीजः' इत्यनेन-अव्यक्तलिङ्गमक्षरस्वरूपमात्माख्यं च वस्तु संदर्शितं भवति, इत्यपि विज्ञायते। तस्मादेव तन्महत्तत्त्वस्योत्पत्तिश्च परिदृश्यते। तस्मात्साहंकारमव्यक्तप्रभवं च महत्तत्त्वमेव प्रथमज्ञानव्यवसायाधिकरणं भवतीति शुद्धार्यसिद्धान्तः।

वासिष्ठाः पुनराचार्याः—महत्तत्त्वस्य 'आत्मा, बुद्धिः' इति द्वैविध्यं च कल्पयन्ति। ततश्च 'आत्मबुद्ध्यहंकारलक्षण-मव्यक्तप्रभवं च महत्तत्त्वमेव प्रथमव्यवसायाऽधिकरणं भवति, इति वदन्ति। नचाऽव्यक्तस्य च तत्त्वस्य स्वभावात्प्राथम्यस्य सत्त्वात्तस्यैवं प्रथमव्यवसायाऽधिकरणत्वं वक्तुं युक्तमिति वाच्यम्, तस्य चोपसंहारपरयोगव्यवसायाऽधिकरणत्वेन तदुपक्रमपरप्रथम-व्यवसायाऽधिकरणत्वाऽसंभवात्। न चैवं योगव्यवसाय एव प्रथमः स्यादिति वाच्यम्, तदुपक्रमोपसंहारयोस्तदुपक्रमप्राथम्य-स्यैव न्यायसिद्धत्वाद्योगे च तदन्येषां विशेषणत्वाच्च, इत्यादि च तैश्चाऽभिप्रेतं भवति।

अत्र भगवान्टंकाचार्यस्तु—महत्, इति त्ववयवद्वयात्मकं पदं भवति, 'म-हत्, इति। अत्र मकारेण 'क्षेत्रज्ञश्चाऽयमात्मा परमात्मा पुरुषः, इति प्रसिद्धं देहलोकेश्वरस्वरूपं च ब्रह्माऽभि-धीयते। हत्, इत्यनेन हि 'तदभिवर्णितं ब्रह्मस्वरूपं च यया हि शक्त्या चोपहितं व्यवसायनायकं भवति, सा च महाप्रज्ञारूपा महामतिर्बुद्धिशक्तिरखण्डाकारा च ज्ञानदेवी, समभिवर्णिता भवति। तथा च, म, इत्यनेनाऽऽत्मा, हत्, इत्यनेन तदात्मशक्तिश्च नानाना-मभिरभिवर्णिता, अभिहितं भवतीति विज्ञायते। सैव हि योगशक्ति-र्मायेति, सैव हि यथाधिकारं च देव्यादिनामभिर्व्यवह्रीयते, इत्यपि च विज्ञायते। एवमव्यक्ततत्त्वेऽपि च, अ-व्यक्तम्, इत्यवयवद्वयमु-

च्यते। तत्र, अ-इत्यनेन परमात्मा, व्यक्तम्, इत्यनेन तद्योगशक्तिश्च परमेश्वरी देवी महास्मृतिरूपा च कथितं भवति, इति विज्ञायते। एवं यथातत्त्वविभागं च मुख्यतत्त्वानां रहस्यार्थश्चाऽप्यवगम्यते। तस्मात् 'महत्' इत्यनेन तदात्मबुद्ध्योश्च भवति सामान्यतो ग्रहणम्। एवमर्थद्वयोपस्थितिमवलंब्यैव हि श्रुतिभिः "इन्द्रियाणि पराणि, ततः परं मनः, ततोऽहंकारः, ततो बुद्धिः, ततो महत्, ततोऽव्यक्तम्, ततः पुरुषश्च पञ्चमः" इत्युपसंहारदशायां क्रमकथनेन महद्बुद्ध्योश्च भेदः समभिवर्णितः, इत्याहुः। नचाऽत्र बुद्धिमहतोश्च भेदकथनेन महदपेक्षया बुद्धिरतिरिक्ता स्यादिति वाच्यम्, महदित्यनेनात्राऽऽत्मनो ग्रहणमिति व्याख्यानान्महत्तत्त्वव्यतिरिक्तत्वेन बुद्धितत्त्वस्याऽनभ्युपगमाच्च। न चैवं तत्त्वविभागेषु व्यवसायषट्कं व्यवसायसप्तकं च वा स्यादिति वाच्यम्, तदव्यक्तपुरुषयोर्योगे बहूनां च व्यवसायानां सत्त्वेऽपि चतुर्णामेव तेषां व्यवसायानां मुख्यत्वेनाऽनुभूयमानत्वात्। तस्माच्च 'आत्मबुद्ध्यहंकाराः, मनस्तन्मात्रा ज्ञानेन्द्रियाणि, महाभूतानि कर्मेन्द्रियाणि, इति सामान्यतो यथाधिकारं यथासंसारव्यवसायं च तत्त्वानां विभागो भवतीति सिद्धान्तः। एवं टंकाचार्यानुयायिनस्त्वाचार्याः स्वाचार्योक्तार्थप्रमाणतया महाभारतस्थाचार्यकुमारवचनं चाङ्गीकुर्वन्ति। यथावा—

"इन्द्रियेभ्यो मनः पूर्वं ह्यहंकारस्ततः परम्।
अहंकारात्परा बुद्धिर्बुद्धेः परतरं महत्॥

महतः परमव्यक्तं चाव्यक्तात्पुरुषः परः।
एतावदेतत्सांख्यानां दर्शनं देवसत्तम॥"

इति। अत्र महतो बुद्धेश्चैकार्थकत्वेऽपि भेदेन कथनादुक्तो महत्तत्त्वभेदश्च शास्त्रीय इति तेषामाशयः। अत एव हि "विज्ञानं च विवेकश्च महतो लक्षणं भवेत्" इति महाभारतवचनं साधु संगच्छते। अत एवेत्थम् "बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माऽधिदैवतम्" इति कुमारसूत्रेण महत्तत्त्वस्य स्वरूपं यथावच्च व्याख्यातम्। तस्मान्महत्तत्त्वस्य भेदः सुसंगत इति तदार्यसिद्धान्तः।

अन्ये पुनरत्र ह्याचार्याः—मकारेण तदबद्धं चात्मस्वरूपम्, हत्, इत्यनेन बद्धं च तदात्मस्वरूपमभिधीयते। सोऽयमात्मा हि क्षेत्रज्ञः स्वस्य च तदैकैकस्मिन्नपि संसारे तद्व्यवसाये च स्वयमबद्धो बद्धश्च भवतीति विज्ञायते। तदुक्तम्—

"निर्मलश्चाऽयमात्मा तु स्वकीये धर्मलक्षणे।
व्यवसाये यथावस्थं बद्धोऽबद्धश्च दृश्यते॥
स्वदृष्ट्या व्यवसाये च सति क्षेत्रे यथाक्रमम्।
अबद्धो दृश्यते सोऽयं बद्धः प्राकृतदर्शनात्॥
बद्धाऽबद्धस्थितिश्चातो ह्यात्मनो नियता भवेत्।
उक्ता हि संस्थितिश्चेयं वेद्या संसारिभिर्भवेत्॥
स्याद्यथाव्यवसायं च तत्त्वानां हि सतां तथा।
मुख्यार्थः कथितश्चेति विज्ञेयं स्याद्विचक्षणैः॥

इत्थं हि मुख्यतत्त्वानि सार्थानि कथितानि च।
महान् मनश्च भूतानि तथाऽव्यक्तमिति स्थितिः ॥
यथा च महदित्यत्र मकारेण हि कथ्यते।
अबद्धमात्मरूपं च बद्धं च हदितीर्यते ॥
तथा चैव यथार्थं हि विभक्तेषु विशेषतः।
तत्त्वेषु द्विविधो ह्यर्थो विज्ञेयः स्यान्मनीषिभिः ॥
इदमत्र हि विज्ञेयं रहस्यं शुद्धसंमतम्।
दर्शनार्थविचारैश्च नियतैरधिकारिभिः ॥
सर्वत्र बन्धः सर्वेषां स्वशक्त्यैवेति निर्णयः।
स्वशक्त्या प्राप्यमर्थं हि निर्णयन्ति विचक्षणाः ॥
यथा शक्तिस्वरूपं हि सर्वेषामधिकारिणाम्।
सर्वोऽपि व्यवसायश्च वर्धते चेति निर्णयः ॥
ततः प्रथमभागेन शुद्धो ह्यात्माऽभिधीयते।
द्वितीयेन च भागेन सोऽयमात्मा सनातनः ॥
निर्गुणः सगुणश्चैव भासते शक्तिलक्षणः।
इति चैवं पुरा प्रोक्तं नारायणमहात्मना ॥
एवं मुख्यैश्च तत्त्वैस्तु भवदात्मा च वर्णितः।
द्विविधस्त्रिविधश्चेति विज्ञेयमधिकारिभिः ॥
किं च तत्त्वविभागेषु प्रत्येकमपि शाश्वतम्।
वस्तुत्रयं च विज्ञेयं भवेदिति च निर्णयः ॥

आत्मा तथा च शक्तिश्च प्रकृतिश्च महर्षिभिः।
तत्स्याद्वस्तुत्रयं चेति कथ्यते ब्रह्मलक्षणम् ॥"

इति, भगवता नारदेन सनातनधर्मदीपिकायाम्, इत्याहुः। ततश्च तदभिवर्णितमहत्तत्त्वस्वरूपं हि, तद्व्यवसायकारणकार्यस्वरूपधर्मषट्कस्वरूपजिज्ञासुभिरधिकारिभिश्च प्रथमं विज्ञेयं भवति, इति योगब्रह्मविद्याधिकारिणां सिद्धान्तः।

एवमभिवर्णितस्य प्रथमतत्त्वकूटस्वरूपस्य प्रथमपादगतिमतः प्रकृतिविकृतिभावस्य केवलस्य च महत्तत्त्वस्य, तदात्मनः क्षेत्रज्ञस्य च, सति च स्वनियतशक्त्या हि योगे, तस्मिन्नेव महत्तत्त्वे प्रथमो ज्ञानव्यवसायः सर्वव्यवसायहेतुः धर्मषट्कोपेतश्च संभवति। अत्रेदमवधेयम्—यथा वा हि विकृतानां च पदार्थानां प्रत्येकमपि 'आत्मा शक्तिः प्रकृतिः, इति वस्तुत्रयं चाऽवगम्यते, तथैव हि तत्त्वविभागानां प्रत्येकमपि तद्वस्तुत्रयं च विज्ञेयं भवति। अतस्तत्त्वविभागानां प्रथमस्य महत्तत्त्वस्य स्वरूपं च वस्तुत्रयलक्षणं विज्ञेयं भवति। महत्तत्त्वस्य हि, तुरीयव्यवसायाऽधिकरणादव्यक्ताच्च प्रवृत्तौ प्रथमं समुत्पन्नत्वम्, प्रथमव्यवसायाऽधिकरणत्वम्, प्रथमतत्त्वकूटस्वरूपत्वं चेत्यादिकं व्याख्यातम्। अस्मिंश्च पुनः 'आत्मा शक्तिः प्रकृतिः' इति वस्तुत्रयं च तद्व्यवसायनायकं भवति, इति विज्ञायते। अतश्च प्रथमतत्त्वकूटनियते च प्रथमव्यवसाये 'आत्मा' इति यद्वस्तु,

तच्च 'महान् आत्मा मतिः विष्णुः जिष्णुः शंभुः, इति प्रसिद्धैः प्रधानैः षड्भिश्च नामभिरभिधीयते । ततः परं च 'शक्तिः, इति यद्वस्तु, तच्च 'बुद्धिः प्रज्ञा उपलब्धिः ख्यातिः धृतिः स्मृतिः, इति तादृशैः षड्भिर्नामभिश्च व्यवह्रीयते । यच्च पुनस्ताभ्यामपरम् 'प्रकृतिः, इति वस्तु, तच्च पुनरेकेनैव 'आदिः, इति नाम्ना चाऽभिधीयते । एवं प्रथमव्यवसायस्याऽपि 'प्रथमः सर्गः, इति व्यवहारश्च भवति । तस्मादेवमभिवर्णिताऽऽत्मशक्तिप्रकृत्यधीनश्च प्रथमो ज्ञानव्यवसायो भवति, इति सर्वसिद्धान्तः । तदुपपादितः प्रथमो ज्ञानव्यवसायश्च ज्ञानस्वरूपकार्यकारणलक्षणधर्मषट्कोपेतः संभवति । धर्माश्च तेऽपि—नरनारायणधर्मविज्ञानम्, अवतारविज्ञानम्, अधिकारविज्ञानम्, शिक्षाविज्ञानम्, कारणविज्ञानम्, कैवल्यविज्ञानम्, इति प्रसिद्धाः षट् संभवन्ति । अतश्चैवमभिवर्णितधर्मषट्कानुबद्धो व्यवसायश्च प्रथमः, कार्यकारणभावेन द्विविधो भवति, इति विज्ञायते । अतः प्रथमो ज्ञानव्यवसायश्च तादृशधर्मषट्कगुप्तः पूर्णः संभवति । तत्र च नरनारायणधर्मविज्ञानादि विज्ञानस्वरूपं धर्मपञ्चकं च कारणपञ्चकं भवति । कार्यविज्ञानं च कैवल्यविज्ञानं भवति । एवं विज्ञानषट्कगुप्तः प्रथमो ज्ञानव्यवसायो भवति । सुप्रसिद्धं किल धर्माणामभ्युदयात्मकत्वम्, इति । अत एव हि "महत्, इति तत्त्वनाम्ना हि प्रथमव्यवसायानुबन्धिनस्तत्प्रथमव्यवसायगोप्तुश्च, कारणपञ्चकस्य, तत्कार्यस्य

फलस्य च सामान्यतो ग्रहणं भवति। अतश्च ज्ञानपरव्यव-सायाधिकारिभिश्च तत्कारणपञ्चकं तत्कार्यं फलं च विज्ञेयं भवति। 'नरनारायणधर्मविज्ञानसञ्जाता शुद्धिरेव प्रथमं कारणं चाऽधिष्ठानस्वरूपमिति, तद्भगवन्नरनारायणदिव्याऽवतारस्वरूप-विज्ञानं हि करणस्वरूपं च द्वितीयं कारणमिति, तद्भगवदव-तारधर्मविज्ञानसमुपलब्धसशक्तिकनानाविधाऽधिकारस्वरूपविज्ञानं कर्तृस्वरूपोपलब्धिहेतुकर्मविज्ञानरूपं च तृतीयं कारणमिति, तद-धिकृताधिकारस्वरूपानुरूपमहाविद्यावधेयशिक्षाविज्ञानं स्ववैरिनि-रसनपूर्वकस्वसाम्राज्यप्राप्तियोग्यकर्तृस्वरूपनिर्णायकं कर्तृस्वरूप-विज्ञानरूपं च तुरीयं कारणमिति, तदभिवर्णितशिक्षासमधिगम्य-कर्तृस्वरूपविज्ञानजन्यं परप्राप्तिकारणसन्निहितसंसारेश्वरविषयकम् "कारणं तु ध्येयम्" इति श्रुत्यभिवर्णितं कारणविज्ञानं दैवविज्ञानरूपं च पञ्चमं कारणमिति, तत्कारणपञ्चकं विज्ञायते। यद्धि पुनः परवस्तुविज्ञानपूर्वकतत्स्वप्राप्यपरस्थानविज्ञानम्, तदेव कैवल्याख्यं प्रथमव्यवसायफलं षष्ठं धर्मस्वरूपं च भवतीति विज्ञेयम्। ततश्च "तस्माज्ज्ञानेन शुद्धेन" इत्याद्याद्यगीताचरम-श्लोकेन शुद्धिश्च सा ह्यधिष्ठानरूपा, "जन्मकर्म च मे दिव्यम्, इत्यादिद्वितीयगीताचरमश्लोकेन दिव्यावतारस्वरूपविज्ञानं च करणरूपम्, "बाह्यस्पर्शेष्वसक्तात्मा" इत्यादितृतीयगीताच-रमश्लोकेन 'ब्रह्मयोगः, इति प्रसिद्धं कर्मस्वरूपविज्ञानम्, "एवं बुद्धेः परं बुद्ध्वा" इत्यादितुरीयगीताचरमश्लोकेन

स्वात्मविज्ञानलक्षणं कर्तृस्वरूपविज्ञानम्, "नान्यं गुणेभ्यः कर्तारम्" इत्यादिपञ्चमगीताचरमश्लोकेन ईश्वराख्यं परमं कारणं च, "वेदेषु यज्ञेषु" इत्यादिषष्ठगीताचरमश्लोकेन चाऽऽद्य-स्थानसंस्थितिविज्ञानरूपं प्रथमव्यवसायफलम्, इति च तद्धर्मषट्कं हि भगवता वासुदेवेन समुपदिष्टम्" इति पूर्वाचार्या वदन्ति। अत एव हि—

"सर्वतः पाणिपादं च सर्वतोऽक्षिशिरोरुहम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
महाप्रभावः पुरुषः सर्वस्य हृदि निष्ठितः।
अणिमा महिमा प्राप्तिरीशानो ज्योतिरव्ययः॥
तत्र बुद्धिमतां लोके सद्भावनिरताश्च ये।
ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः॥
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः।
प्रसन्नमनसो धीरा निर्ममा निरहंक्रियाः॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत।
आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम्॥
अधिभूतं तथाऽध्यात्ममधिदैवं च शाश्वतम्।
स धीरः सर्वलोकेषु न मोहमधिगच्छति॥"

इति, 'प्रथमव्यवसायाधिकारिविज्ञेयं तदधिकारिणां स्वरूपं तत्प्राप्यं फलं चेति' सर्वं समुपदिष्टमनुगीतायां च भगवता वासुदेवेन।

अत्र हि—प्रथमश्लोकेन 'सर्वव्यवसायनायकत्वेन तत्तत्तत्त्वकूट-सममभिव्याप्तं परमकारणं विषयभूतं प्रथमव्यवसायिभिस्तदन्यैश्चाऽधिकारिभिर्विज्ञेयं शुद्धकेवलस्थानसंसेव्यं परमात्मस्वरूपं ब्रह्मपदवाच्यं च यद्वस्तु, तस्य च सामान्यं स्वरूपम्, समभिवर्णितं भवतीत्यवगम्यते। किं चाऽत्र प्रत्येकमपि व्यवसायानां तदुपसंहारक्रमेण विशेषतो विज्ञेयं सामान्यं वस्तुस्वरूपं च, पादैश्च चतुर्भिः क्रमेण व्याख्यातं भवतीति बुद्ध्यते। इदं चाग्रे वक्ष्यते। अत एव हि कैवल्यगीताध्याये च सप्तमे "सर्वतः पाणिपादम्" इति तथा तद्ब्रह्मस्वरूपमेव समभिवर्णितं च दृश्यते। अथ द्वितीयश्लोकेन हि तदभिवर्णितस्यैव ब्रह्मणो विशेषस्वरूपं च "सर्वेन्द्रियगुणाभासम्" "बहिरन्तश्च भूतानाम्" "अविभक्तं विभक्तेषु" ज्योतिषामपि तज्ज्योतिः" इत्यादिभिः कैवल्यगीताध्यायगतैश्चतुर्भिश्च श्लोकैरभिवर्णितम्, समभिहितं भवतीति बुद्ध्यते। किं चाऽत्र "महाप्रभावः पुरुषः" इत्यनेन तद्भगवन्नरनारायणस्वरूपम्, "सर्वस्य हृदि निष्ठितः" इत्यनेन तस्यैव भगवतो धर्मशास्तुश्चाऽवतारस्वरूपं च सर्वसेव्यम्, "अणिमा महिमा प्राप्तिरीशानः" इत्यनेन तद्भगवत्परमाऽधिकारस्वरूपं, "ज्योतिरव्ययः" इत्यनेन तस्यैव भगवतश्च परमकारणं च स्वरूपम्, समुपदिष्टमिति प्राचीनार्या वदन्ति। ततश्च तृतीयतुरीयपञ्चमषष्ठैः श्लोकैः क्रमेण—महत्त्स्वनियतव्यवसायपराणां चाऽधिकारिणां स्वरूपम्, तेषां

प्राप्यम्, तेषां प्राशस्त्यं च समभिवर्णितं भवति। किं चाऽत्र "बुद्धिमतां लोके" इत्यनेन—ज्ञानव्यवसायिनामधिष्ठानं महत्तत्त्वमेव हि निगद्यते। "सद्भावनिरताः" इत्यनेन—लोकेश्वरभगवन्नरनारायणधर्मविज्ञानम्, तदवताररहस्यविज्ञानम्, तद्भगवन्नियुक्ताधिकारविज्ञानम्, इति त्रयं च धर्मपदवाच्यं प्रथमव्यवसायिवेद्यमभिहितं भवति। एवं सच्छिष्टाचार्यशिक्षितानां च प्रथमव्यवसायिनां स्वरूपं परमकारणवस्तुविज्ञाननिष्ठा च "ध्यानिनः" इत्यादिभिश्च दशभिर्विशेषणैः सम्यग्विविच्य व्याख्यातं भवति। "महत्त्वमुपयान्ति" इत्यनेन प्रथमव्यवसायिनां प्राप्यं फलं हि "योगी परं स्थानमुपैति चाद्यम्" इति गीताप्रथमषट्कचरमश्लोके 'आद्यं स्थानम्, इति भगवन्निर्दिष्टं च समुपदिष्टं भवति। "धीरः सर्वलोकेषु" इत्यनेन व्यवसायिनां च त्रयाणां प्रथमव्यवसायिनः सर्वथा हि प्राशस्त्यं च समभिहितम्, इत्यपि प्राचीनार्यवचनम्। एवं श्रीभगवद्गीतायाः प्रथमषट्कस्य च ज्ञानपरत्वम्, तस्य च धर्मषट्कोपेतत्वं चाऽपि, तद्भगवदुपदिष्टकैवल्यगीतावचनैश्च प्रथमषट्कसंग्रहार्थप्रवचनपरैरभिहितं भवतीत्याद्यन्यत्र विस्तरः। अत एव भगवान्नारदश्चेत्थम्—

## नारदकारिकाः

सैषा भगवती गीता गायत्रीलक्षणा परा ।
चतुर्भिश्चैव पादैश्च गुंभितेति निरूपितम् ॥ ३८ ॥
तथैव प्रतिपाद्यं च षट्प्रकाराश्च धर्मतः ।
कथिताः सन्ति तत्रेत्थं तत्त्वं ज्ञेयं मनीषिभिः ॥ ३९ ॥
क्षेत्रे तदात्मनश्चैव व्यवसाया यथाक्रम् ।
योगाच्च संभवन्तीति तत्त्वदृष्ट्या निगद्यते ॥ ४० ॥
क्षेत्रक्षेत्रज्ञयोगेन व्यवसायाश्च सक्रमाः ।
अनन्ताः परिदृश्यन्ते यद्यपि स्थूलदर्शनात् ॥ ४१ ॥
तथाऽपि तत्त्वदृष्ट्या ते मुख्याश्चत्वार एव हि ।
संभवन्तीति सिद्धान्तः शुद्धाचार्यैरिहोच्यते ॥ ४२ ॥
ते यथातत्त्वकूटं हि विभक्ताः सन्ति धर्मतः ।
ततश्च तत्त्वकूटानि चत्वार्येवेति निर्णयः ॥ ४३ ॥
तत्राऽऽद्यं तत्त्वकूटं च वस्तुत्रयसमुज्वलम् ।
अव्यक्तबीजसंभूतं शुद्धाऽहंकारसंयुतम् ॥ ४४ ॥
प्रथमं व्यवसायं च यदाश्रुत्याऽधिकारिणः ।
कुर्वन्त्यतन्द्रिताश्चैव ज्ञानिनो धर्मबुद्धयः ॥ ४५ ॥
तन्महत्तत्त्वं भवति विज्ञेयं तच्च योगिभिः ।
कर्मठैश्चैव भक्तैश्च ज्ञानिभिश्चेति निर्णयः ॥ ४६ ॥

यश्चाऽऽद्यो व्यवसायः स्यात्स भवेज्ज्ञानलक्षणः ।
कार्यकारणभावाभ्यां द्विविधः स इतीर्यते ॥ ४७ ॥
पञ्च स्युर्धर्मरूपाणि कारणानीति निर्णयः ।
तानि स्युराद्यगीताभिः पञ्चभिः कथितानि च ॥ ४८ ॥
तत्परस्थानविज्ञानं कार्यरूपमितीर्यते ।
यत्र स्थित्वा तुरीयं च वस्तु जानन्ति केवलाः ॥४९॥
तत्परस्थानविज्ञानं वस्तुविज्ञानलक्षणम् ।
कैवल्यगीतया चैवं षष्ठ्या च हि निगद्यते ॥ ५० ॥
क्षेत्रज्ञस्याऽऽत्मनश्चैव व्यवसायपरस्य हि ।
तदिदं हि महत्तत्त्वं प्रथमं रङ्गमुच्यते ॥ ५१ ॥
उपक्रमपरत्वे तु तदिदं प्रथमं भवेत् ।
उपसंहारपरत्वे तृतीयं तदिदं भवेत् ॥ ५२ ॥
इत्थं हि प्रथमे चैव व्यवसाये भवन्ति च ।
पञ्च धर्मस्वरूपाणि कारणानि च तानि हि ॥ ५३ ॥
नरनारायणधर्मविज्ञानं प्रथमं भवेत् ।
तदधिष्ठानरूपं स्यादिति शुद्धैर्निगद्यते ॥ ५४ ॥
तदधिष्ठानविज्ञानात्पुमान् शुद्धश्च जायते ।
स एव हि विशोकश्च स्थानं ह्याद्यमुपैति च ॥ ५५ ॥
अतो योगीश्वरः कृष्णः प्रथमं चैवमेव हि ।
"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥ ५६ ॥

गतासूनगतासूंश्च नाऽनुशोचन्ति पण्डिताः ।"
इत्यारभ्य हि पार्थाय गीतां हि प्रथमां पराम् ॥ ९७ ॥
शुद्धां चोपदिशन्नेव तदन्ते च पुनः स्वयम् ।
आद्यगीतापरिज्ञानफलं चैवं ह्युपादिशत् ॥ ९८ ॥
"तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्माऽऽत्मविच्छुचिः ।
असादयति तद्ब्रह्म यत्र गत्वा न शोचति ॥" ९९ ॥
इत्यतः प्रथमं ज्ञानं सर्वमूलमितीर्यते ।
यथाऽस्मिन्भुवने चैको नरनारायणो विभुः ॥ ६० ॥
लोकनाथो धर्मशास्ता नानानामगुणोज्वलः ।
भवेत्तथाऽस्मिन्देहे च स भवेदीश्वरः स्वयम् ॥ ६१ ॥
अतश्चैवं हि भगवान्नरनारायणः पुनः ।
वर्ण्यते तत्त्वशास्त्रज्ञैर्योगिभिर्नियतात्मभिः ॥ ६२ ॥
नरश्चात्मा ततो जातान्याकाशादीनि यानि च ।
तत्त्वानि तानि नाराणीत्याहुर्वेदविदो जनाः ॥ ६३ ॥
कार्यरूपाणि तान्येव ह्ययते कारणात्मना ।
यश्च सोऽयं हि भगवान्भवेन्नारायणाऽभिधः ॥ ६४ ॥
यच्चाऽस्मिन्भुवने देहे सर्वकारणकारणम् ।
समुपास्यं च भवति प्रथमव्यवसायिभिः ॥ ६५ ॥
तच्च नारायणाख्यं स्याद्वस्तु तच्च सनातनम् ।
नरोपेतं भवेच्चेति भारतादवगम्यते ॥ ६६ ॥

तस्मात्तद्धर्मविज्ञानं भवेदेवाऽत्मशुद्धिदम् ।
आत्मशुद्ध्याऽऽत्मशक्तिश्च वर्धते सर्वभूतिदा ॥ ६७ ॥
अथाऽवतारविज्ञानं तस्य वै परमात्मनः ।
द्वितीयं कारणं च स्यात्करणात्म च तद्भवेत् ॥ ६८ ॥
ततोऽधिकारविज्ञानं तृतीयं कारणं भवेत् ।
तच्च कर्मस्वरूपं स्यादिति शुद्धैरिहोच्यते ॥ ६९ ॥
ततः शिक्षापरिज्ञानं तुरीयं कारणं भवेत् ।
तच्च कर्तृस्वरूपं स्यादात्मसांम्राज्यहेतु च ॥ ७० ॥
कारणात्मपरिज्ञानं यच्च वै श्रुतिचोदितम् ।
तत्पञ्चमं कारणं स्याद्दैवविज्ञानलक्षणम् ॥ ७१ ॥
इति तस्मात्पञ्चधर्मज्ञानरूपाणि तानि च ।
कारणानि च विज्ञेयानीत्याहुः शुद्धयोगिनः ॥ ७२ ॥
अतः प्रथमषट्केऽस्मिन्षड्वै धर्माश्च शाश्वताः ।
नियताः स्युरितीत्येवं सिद्धान्तः शुद्धसंमतः ॥ ७३ ॥
तस्मात्प्रथमकूटं च तत्त्वानां हि महर्षयः ।
समाविष्टस्यात्मनश्च तच्छक्तेश्चैव योगतः ॥ ७४ ॥
सर्वेषां व्यवसायानां प्रथमोऽयं च सक्रमः ।
प्रसिद्धधर्मषट्कश्च ज्ञानरूपो भवेदिति ॥ ७५ ॥
तत्त्वज्ञैर्धर्मकामैश्च ह्यलूक्षैश्च महात्मभिः ।
तथा सिद्धैर्महर्षिभिः सप्रमाणं निरूपितः ॥ ७६ ॥

पुरुषार्थेषु सर्वेषु प्रथमोऽयं निगद्यते ।
वयसि प्रथमे चैव सोऽयं स्यान्नियतः परः ॥ ७७ ॥

सर्वेषां प्राणिनां चेति भारतादवगम्यते ।
अयमेव हि सर्वेषां प्रथमं दर्शनं भवेत् ॥ ७८ ॥

व्यवसायाद्भवेदस्माज्ज्ञानं वै शुद्धलक्षणम् ।
तत्परस्थानविज्ञानरूपं स्वातन्त्र्यदायकम् ॥ ७९ ॥

प्रथमाश्रमिभिः सेव्यो धर्मोऽयं हि सनातनः ।
ज्ञानस्वरूपश्च भवेदिति प्रोक्तं महात्मभिः ॥ ८० ॥

तस्माद्योगब्रह्मविद्याप्रथमाङ्घ्रिः सनातनः ।
षड्भिश्चैव हि गीताभिर्युक्तो वेद्य इतीर्यते ॥ ८१ ॥

इति, श्रीभगवद्गीतायाः प्रथमषट्कस्य तदुपपादितधर्मषट्कोपेतत्वं च व्याख्याति । एवम्—

## कुमारकारिकाः

या हि योगब्रह्मविद्या व्याख्याताऽस्ति विशेषतः ।
तस्या गतिविशेषाच्च विषयादिविभेदतः ॥ ८० ॥

पादा भवन्ति चत्वारश्चेति पूर्वं निरूपितम् ।
प्रतिपादं च वेद्याः स्युः षड्वै धर्माः सनातनाः ॥ ८१ ॥

क्षेत्रे क्षेत्रज्ञयोगेन कार्यकारणलक्षणाः ।
ते च धर्माश्च जायन्ते व्यवसायस्य रक्षकाः ॥ ८२ ॥

ततस्तत्त्वकुलारब्धं क्षेत्रं वै सर्वदर्शनैः।
धर्माऽधिकरणं चेति कथ्यते च स्वभावतः॥ ८३॥
तच्च तत्त्वकुलारब्धं क्षेत्रं वै धर्मलक्षणम्।
व्यवसायाऽधिकरणं चेति तत्त्वविदो विदुः॥ ८४॥
तानि तत्त्वकुलान्यस्मिन्क्षेत्रे चैव तदाऽऽत्मनः।
चत्वार्येव भवन्तीति मया दृष्टं हि योगतः॥ ८५॥
तेषु चाऽव्यक्तसंभूतं द्विमुखं पञ्चकारणम्।
तथा चैकफलं चैव वस्तुत्रयसमुज्वलम्॥ ८६॥
षड्भिर्धर्मैरुपेतं च साहंकारं च यद्भवेत्।
तच्च स्यात्प्रथमं तत्त्वकुलं महदितीर्यते॥ ८७॥
तन्महत्तत्त्वचक्रं च कार्यकारणलक्षणम्।
प्रवृत्तिपरया चैव निवृत्तिपरया तथा॥ ८८॥
दक्षिणया चोत्तरया गत्या हि भ्रमतेऽर्थदम्।
एतत्साक्षान्मया दृष्टं पुरा योगबलेन हि॥ ८९॥
एवं योगेश्वरेणैव प्रोक्तं पार्थाय धीमते।
शिक्षाध्याये च गीतायां ततस्तत्त्वकुलं महत्॥ ९०॥
प्रथमव्यवसायस्य ज्ञानरूपस्य धर्मतः।
कार्यकारणरूपस्य सिद्धाऽधिकरणं भवेत्॥ ९१॥
तत्त्वेऽस्मिन्नादिमे चैव धर्माः स्युर्गणिताश्च ये।
रक्षकाश्च विशेषेण प्रथमव्यवसायिनाम्॥ ९२

तेषां स्वरूपमेवं हि विज्ञेयं स्याद्विविच्य हि ।
तत्र कारणरूपाः स्युः पञ्च धर्माः परायणाः ॥ ९३ ॥
षष्ठो यश्च परो धर्मः कार्यरूपः स चोच्यते ।
प्राप्यविज्ञानरूपश्च प्राप्यं त्वाद्यं परं पदम् ॥ ९४ ॥
वसन्तो ये च लोकेऽस्मिन्देहिनो धर्मवत्सलाः ।
मुमुक्षवः परस्थानप्रेप्सवो ह्यधिकारिणः ॥ ९५ ॥
प्रवृत्ताश्च तथा तेषां सर्वेषां ह्यधिकारिणाम् ।
भगवद्धर्मविज्ञानमाद्यं वै कारणं भवेत् ॥ ९६ ॥
लोकेश्वरश्च भगवान्सर्वभावसमुज्वलः ।
सर्वेषां चैव धर्माणां शास्ता नारायणो भवेत् ॥ ९७ ॥
भगवद्धर्मविज्ञानाद्विशुद्धं हि महद्भवेत् ।
शुद्धे महति लोके च सेव्यो नारायणो भवेत् ॥ ९८ ॥
प्रसादादस्य सर्वेऽपि शुद्धाश्चैवाऽधिकारिणः ।
क्रमेण परमं स्थानं भजन्तीति च निर्णयः ॥ ९९ ॥
तस्मादेव हि सर्वेषां शुद्धात्मव्यवसायिनाम् ।
भगवद्धर्मविज्ञानं प्रथमं कारणं भवेत् ॥ १०० ॥
तस्य लोकेश्वरस्यैव नारायणपरात्मनः ।
अवताररहस्यस्य दिव्यभावोज्वलस्य च ॥ १०१ ॥
विज्ञानं च द्वितीयं स्यात्कारणं धर्मलक्षणम् ।
तेनैव हि परं भावं भजन्ति ह्यधिकारिणः ॥ १०२ ॥

नारायणेन देवेन कल्पिताश्च यथाभवम् ।
अधिकारा ये च शुद्धास्तेषां विज्ञानमेव हि ॥ १०३ ॥
ब्रह्मयोगनिदानं च विशुद्धं धर्मलक्षणम् ।
तृतीयं कारणं चेति शुद्धार्यसमयो भवेत् ॥ १०४ ॥
एवं विशुद्धसत्वानां दिव्यानामधिकारिणाम् ।
या चाऽस्ति शुद्धशिक्षा च स्वात्मविज्ञानकारणम् ॥ १०५
शुद्धात्मभावदा चैव विशुद्धज्ञानलक्षणा ।
सा भवेत्कारणं चैव तुरीयमिति निर्णयः ॥ १०६ ॥
एवं सुशिक्षितानां च शुद्धविद्यावतां पुनः ।
हार्देश्वरपरिज्ञानं यच्च वै दैवलक्षणम् ॥ १०७ ॥
तत्पञ्चमं कारणं स्यात्स्वात्मसाम्राज्यलक्षणम् ।
अस्माच्चाद्यं परं स्थानं भजन्ति ह्यधिकारिणः ॥ १०८ ॥
इति ये पञ्चधर्माश्च कारणज्ञानलक्षणाः ।
आद्याभिः पञ्चगीताभिर्व्याख्यातास्तेमहात्मना ॥१०९॥
तत्परस्थानसंस्थानस्वरूपज्ञानलक्षणः ।
षष्ठो यः कार्यरूपश्च शुद्धकैवल्यभावदः ॥ ११० ॥
सोऽयं धर्मश्च कथितः षष्ठ्या वै गीतया भवेत् ।
भवेदस्माद्धि धर्माच्च स्वातन्त्र्यं शुद्धलक्षणम् ॥ १११ ॥
दक्षिणोत्तरयोश्चैव मार्गयोश्च यथाविधि ।
धर्मात्सञ्चरतां चैव सर्वेषां ह्यधिकारिणाम् ॥ ११२ ॥

धर्मोऽयं जीवभूतश्च ब्रह्मचारित्रलक्षणः ।
भवेदिति हि विज्ञेयं योगब्रह्मपरायणैः ॥ ११३ ॥

तस्मात्प्रथमषट्कस्य प्रथमव्यवसायिनः ।
धर्मषट्कस्वरूपत्वं गीतायाः स्यादितीर्यते ॥ ११४ ॥

विद्याऽधिकारिभिः सर्वैः परप्रेप्सुमुमुक्षुभिः ।
भवेच्च प्रथमं षट्कं विज्ञेयमिति निर्णयः ॥ ११५ ॥

इति, भगवता कुमारेणाऽपि योगब्रह्मविद्यास्वरूपायाश्च श्रीभगवद्गीतायाः, ज्ञानपरस्य च प्रथमपादस्य, नरनारायणधर्मादिधर्मषट्कस्वरूपत्वं च भवति व्याख्यातम्। अत एव हि-“तदुपक्रमोपसंहारपरसंसारस्वरूपव्याख्यानपूर्वकं हि तत्सर्वस्वभावोपेतयोगब्रह्मस्वरूपव्याख्यानपराया योगब्रह्मविद्यास्वरूपाया गायत्रीलक्षणायाश्च श्रीभगवद्गीतायाः प्रथमे पादे प्रबोधकाललक्षणे च, वस्तुत्रयनायकाः षडेते धर्माः सर्वव्यवसायमूलज्ञानव्यवसायलक्षणाश्च संभवन्ति। अत्र हि सर्वेषां च प्रथमाश्रमिणां स्वस्वरूपविज्ञानपूर्वकस्वनियतस्वातन्त्र्यसिद्धये च भगवान् “नाऽन्यं गुणेभ्यः कर्तारम्” इत्यादिना ‘परमकारणस्वरूपं सर्वेषामन्तः प्रविष्टं च शास्तारं ब्रह्मस्वरूपं तुरीयमात्मानं च, सर्वविद्याऽधिकार्युपास्यत्वेन प्रदर्शयति। गुणमय्यात्मशक्त्योपहितैरधिकारिभिर्यथाविज्ञानं च क्रियमाणेषु संसारव्यवसायेषु ‘यश्चाऽयमात्मा परमकारणस्वरूपः, स च गुणाऽभिधो भवति। तस्य स्वभावात्त्रै-

विध्यमिति, संसारेऽस्मिंश्च तेभ्य एव हि विशिथिला ह्यनन्ता व्यवसायाश्चाऽस्वतन्त्राः संभवन्तीति, तत्र च गुणानुरूप-व्यवसायपराणां सर्वेषां चाऽधिकारिणां स्वनियतस्वातन्त्र्यसिद्धये चैव सेयमात्मोपासना च विधीयत इति, चाप्यत्र विज्ञायते। तदिदमभिवर्णितं स्वातन्त्र्यमपि, प्रवृत्तिपरं निवृत्तिपरं चेति द्विविधमित्यवगम्यते। दक्षिणायनं च प्रवृत्तिपरम्, अपरं चोत्तरायणम्, इत्यभिवर्ण्यते। एतद्धर्माणामपि कार्यकारणरूपाणां वस्तुत्रयनायकानां ज्ञानव्यवसायपराणामाद्यषट्कप्रतिपादितानां च तादृशद्वैविध्यमवगम्यते। ज्ञानपरेऽस्मिंश्च प्रथमपादे नरनारायणधर्मश्च प्रथमः। स एव शुद्धसंस्कारलक्षणो भवति। धर्मादस्माद्धि सर्वेऽप्यधिकारिणश्च स्वपरस्थानविज्ञानिनः स्वतन्त्रकैवल्याश्च भवन्ति। यच्चाऽधिकारिणां स्वातन्त्र्यम्, तदेव कैवल्यं स्यादित्यवगम्यते। अतश्च 'अस्ति कश्चिद्भगवान्महेश्वरो लोकेश्वरः, इति, तस्य च यथोन्मेषनिमेषं लोकसंरक्षणार्थं हि भवन्ति चावताराः इति, तथैव हि तैः संस्थापिता भवन्त्यधिकारिणोऽधिकाराश्चेति, तदधिकारानुरूपा शिक्षा च स्वात्मोपासनाविधानरूपाऽस्ति काचिदिति, एवं शिक्षितानां च स्वेप्सितकैवल्यसिद्धये पुनः परमकारणं विजातीयं च वस्तु किंचिदस्तीति, यथाधिकारं हि कैवल्यमित्थमस्तीति च, विज्ञानं हि, सर्वेषामारभ्य शैशवं यथा भवति, तथैव सर्वैर्भवितव्यम्। सर्वैरपि प्रथमव्यवसायिभिश्च वेद्योऽर्थश्च पुष्कलोऽत्र भगवता व्याख्यातः। प्रथममण्डलव्यव-

सायनायकं यच्च वस्तुत्रयं 'आत्मा शक्तिः प्रकृतिः, इति, तत्र—आत्मा च महान्, इत्यादिषड्भिरभिधानैः, शक्तिश्च 'बुद्धिः' इत्यादिभिः षड्भिर्नामभिश्च, प्रकृतिश्च, आदिः, इत्येकेनैव नाम्ना च व्यवह्रियते। इदमेव वस्तुत्रयं हि तदन्यमण्डलेष्वपि च व्यवसायनायकं भवति। ततः षडेते धर्माश्चैव प्रथमपादप्रतिपाद्याः, द्वितीयतृतीयतुरीयपादेषु च प्रत्येकमपि यथाधिकारं यथाक्रमं च विजातीयनामभिर्हि व्यवह्रीयन्ते। तत एव च सर्वत्र तदेषां धर्माणां च षण्णां कार्यकारणभावेन द्वैविध्यम्, तत्र च कारणपराणां पञ्चप्रकारकत्वम्, कार्यस्वरूपस्य तस्य चैकत्वम्, इति निर्णयः। ततश्चैते धर्माः सर्वेऽपि यथाधिकारं च क्रमेण व्यवसायिभिर्नियमेन विज्ञेया भवन्ति। अत एव हि "कार्पण्यदोषोपहतस्वभावः" इत्यादिभिः प्रथमं स्वस्य कार्पण्यदोषोपहतस्वरूपत्वम्, धर्मसंमूढचेतस्कत्वं च, समावेद्य, ततस्तन्निवृत्तये पुनः कर्तव्याऽकर्तव्यनिश्चयाय च "शिष्यस्तेऽहम्, इति शरणाऽऽगताय पार्थाय, त इमे धर्माश्च यथाधिकारं यथाक्रमं च भगवता समुदिष्टा इति विज्ञायन्ते। स्वस्वरूपाऽविज्ञानमूलं च तदस्वातन्त्र्यमेव कार्पण्यदोषरूपं हि भवेदिति विज्ञायते। एवं भगवतो धर्मोपदेशेनैव हि पार्थस्य कार्पण्यदोषस्वरूपमस्वान्त्र्यं तत्कारणमनीशा च व्यपनीयत इत्यवगम्यते। धर्माश्च तेऽपि प्रथमपुरुषार्थपराः प्रथमाश्रमिभिः सेव्या विचार्याश्च भवन्ति। तस्मादेव सर्वैरप्यधिकारिभिः प्रथमं षडेते धर्माश्च यथाक्रमं

विज्ञेया भवन्ति" इति प्राचीनार्या हंसा व्याचख्युः । किं चैवमपि—

"एतद्वस्तुत्रयं चैव व्यवसायस्य नायकम् ।
भवेदिति हि सिद्धान्तः शुद्धाचार्यानुसंमतः ॥
तन्महत्तत्त्वकूटस्य व्यवसायो महर्षयः ।
धर्मैः षड्भिरुपेतश्च भवेदिति च निर्णयः ॥
संपूर्णव्यवसायेन प्रथमेन च देहिनाम् ।
सर्वज्ञत्त्वं विशेषेण जायते ब्रह्मलक्षणम् ॥
क्षेत्रज्ञश्चाऽयमात्मा हि ज्ञानकोशे यथाबलम् ।
सर्वज्ञो जायते चेति शुद्धयोगिभिरुच्यते ॥
महदित्याख्यया यच्च वर्णितं तत्त्वमण्डलम् ।
तच्चैवं हि विशेषेण विज्ञेयं मुनिपुङ्गवाः ॥
परमात्मस्वरूपं च यस्मिन्कोशे ह्युपास्यते ।
स च ज्ञानमयः कोशो भवेदिति च निर्णयः ॥
सोऽयं हि द्वाभ्यामंशाभ्यां युक्तो भवति चिन्मयः ।
तत्र द्वितीयो ह्यंशः स्यान्महत्कूटोपलक्षितः ॥
अंशो यः प्रथमः सोऽयं भवेदव्यक्तलक्षणः ।
इति किं च पुनस्तस्मिन्विज्ञेयं चैवमेव हि ॥
द्वितीयज्ञानकोशांशे तन्महन्मण्डलोज्वले ।
हदित्यनेन शब्देन प्रोक्तो यश्च सनातनः ॥

सगुणो निर्गुणो धर्मनायकः क्षेत्रवित्पतिः ।
व्यवसायपरो बद्धश्चेति सोयं सनातनः ॥
प्रवृत्तिपरया चैव निवृत्तिपरया तथा ।
गत्या विषमया चैव चेष्टते ब्रह्मलक्षणः ॥
तथा यश्च मकारेण सूचितः शुद्धलक्षणः ।
सोऽयं विशुद्धया गत्या सर्वज्ञश्च समः परः ॥
इति तस्मात्प्रथमश्च व्यवसायो महर्षयः ।
विषमश्च समश्चेति भवेदित्येव निर्णयः ॥
ततश्च विषमं चैव समं चैवेति दर्शनम् ।
भवेदिति हि सिद्धान्तः शास्त्रसिद्ध इतीर्यते ॥
यत्सांख्यदर्शनं तद्धि विषमं चेति बुद्ध्यते ।
यद्योगदर्शनं तद्धि समं स्यादिति निर्णयः ॥
ते चोभे दर्शने चैव समं पश्यन्ति येऽर्थिनः ।
ते चैव परमं देवं सर्वकारणकारणम् ॥
पश्यन्तीति च सिद्धान्तः शुद्धाचार्यानुसंमतः ।
अतश्च भगवानेवं प्राह पार्थाय धीमते ॥
"लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥
साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥

यत्साङ्ख्यैः प्राप्यते ज्ञानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥"
इति कारणगीतायां दर्शनद्वयलक्षणम् ।
आत्मवस्तुपरिज्ञानप्रकारं च ततश्च हि ॥
"नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥"
इत्येवं हि पुनस्तस्य महतो द्विविधस्य च ।
वाच्यार्थमन्ते भगवान्व्याख्याति स्म स्वयोगतः ॥
ततश्च ज्ञानकोशस्य द्वितीयांशे महर्षयः ।
हृदिति व्याहृतो ह्यात्मा राजते च सशक्तिकः ॥
तथा मकारवाच्यो यः शुद्धश्चैव गुणात्परः ।
सोऽपि द्वितीये ह्यंशेऽस्मिन्ज्ञानकोशस्य राजते ॥
इत्येवं वर्णिते ते च दर्शने ह्यधिकृत्य तु ।
प्रथमे तत्त्वकूटे च धर्मषट्कसमन्वितः ॥
प्रथमव्यवसायश्च भवेदिति च निर्णयः ।
इति ज्ञेयं विधानेन नियतैर्ब्रह्मचारिभिः ॥
तथा धर्मपरैश्चैव शुद्धधर्मपरायणैः ।
तस्माच्च प्रथमं ज्ञानं मुख्यमित्येव चोदितम् ॥
इत्येवं प्रथमं तत्त्वकूटं व्याख्यातमाश्रुतम् ।
मया हि तच्च विज्ञेयं विशेषेण महर्षिभिः ॥"

इति, सनातनधर्मदीपिकायां तन्महत्तत्त्वं च विशेषेण व्याख्यातं भवति। अन्यच्चात्र वक्तव्यं विज्ञेयं सर्वमपि यथाप्रकरणमग्रे विशेषतो व्याख्यातं भविष्यति। तस्मादेवमुपपादितभगवद्वचनै-स्तन्महनीयाऽऽचार्यप्रमाणवचनैश्च तदुपपादितयोगब्रह्मविद्यास्व-रूपायाः श्रीभगवद्गीतायाश्च प्रथमषट्कस्य वस्तुत्रयनायकनरना-रायण धर्मादिधर्मषट्कोपेतत्वं षडध्यायनिबद्धत्वं च भवति, इति शुद्धार्यसिद्धान्तः।

अथ च द्वितीयं मनस्तत्त्वकूटं भवति 'तच्च हि भक्तिपरं महाभूतेन्द्रियेश्वरं सर्वधारकं प्रार्थनालक्षणं च भवतीत्यभिवर्णि-तम्। अस्य च दक्षिणोत्तरमुखाहंकारयुक्तत्वं बीजप्रसवस्व-रूपत्वं च प्रथमतत्त्वकूटवद्भवतीति विज्ञायते। एवमभिवर्णितस्य द्वितीयतत्त्वकूटस्वरूपस्य द्वितीयपादगतिमतः प्रकृतिविकृति-भावस्य केवलस्य च मनस्तत्त्वस्य, सशक्तिकस्य तदात्मनः क्षेत्रज्ञस्य च, सति च स्वनियतशक्त्या हि योगे, तस्मिन्नेव मन-स्तत्त्वे द्वितीयः कर्मव्यवसायहेतुः सङ्कल्पविकल्पाद्यात्मकः प्रार्थ-नारूपश्चेच्छाव्यवसायः कार्यकारणभावधर्मषट्कोपेतश्च संभवति, इति विज्ञायते। प्रथमतत्त्वकूट इवाऽस्मिन्नपि व्यवसायनायकं च 'आत्मा' शक्तिः, प्रकृतिः, इति प्रसिद्धं वस्तुत्रयं हि भवेदिति विज्ञायते। यद्यपि द्वितीयव्यवसायस्याऽस्य स्वरूपतः प्रथमव्यवसायाद्भिन्नत्वेन प्रथमव्यवसायनायकवस्तुत्रयाद्भिन्नमेव विजातीयं तादृशं वस्तुत्रयमत्र वक्तुं युक्तम्, तथापि प्रथमव्यव-

सायनायकवस्तुत्रयस्यैव स्वरूपभेदेन सर्वव्यवसायनायकत्वात्सूत्रात्मस्वरूपत्वेन सर्वत्र व्यापृतत्वात्सर्वव्यवसायजीवभूतत्वाच्च तस्यैव द्वितीयव्यवसायनायकत्वप्रतिपादनमपि युक्तमेव। अत एव हि–

"मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात्।
मनसा चिन्तितानर्थान्बुद्ध्या चैव व्यवस्यति॥
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः।
लक्षणं मनसो ध्यानमव्यक्तं साधुलक्षणम्॥" इति,

"मनसश्च गुणश्चिन्ता प्रज्ञया स तु गृह्यते।
हृदिस्थश्चेतनो धातुर्मनो ज्ञाने विधीयते॥
बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा।
निश्चित्य ग्रहणाद्व्यक्तमव्यक्तं नात्र संशयः॥" इति,

"स हि धाता विधाता च स प्रभुः सर्वतोमुखः।
हृदयं सर्वभूतानां महानात्मा प्रकाशते॥"

इति चाऽनुगीतावचनैश्च प्रथमव्यवसायनायकवस्तुत्रयस्यैव सर्वव्यवसायनायकत्वमभिवर्ण्यते। अत एव च "सर्वतः पाणिपादं च सर्वतोऽक्षिशिरोरुहम्" इत्यनुगीतावचनैर्महत्तत्त्वव्यवसायनायकाऽऽत्मवस्तुस्वरूपव्याख्यानपरैश्च तदुक्तार्थ एव व्याख्यातो भवति। यच्च पुनः प्रथमव्यवसायिनां हि तत्परमकारणवस्तुस्वरूपविज्ञानपूर्वकं स्वपरस्थानविज्ञानम्, तदेव स्वातन्त्र्यलक्षणं च कैवल्याख्यं फलं भवति, इत्यभिवर्णितम्। अतस्तेषामेव प्रथमव्यव-

सायिनां तत्परस्थानप्राप्तये हि तदभिवर्णितद्वितीयव्यवसाये च प्रवृत्तिः सञ्जायते। तत एव च द्वितीयो व्यवसायश्च प्रार्थकनियतः, स्वभावात्प्रवृत्तौ प्रथमव्यवसायादनन्तरश्च भवति। तस्मादेव ह्यनयोः प्रथमद्वितीयव्यवसाययोः कार्यकारणभावसङ्गतिश्चापि विज्ञायते। यथा वा हि लोकेऽधिकारिणां सति च कस्य चिद्वस्तुनो भोग्यस्य विज्ञाने, ततो हि तद्वस्तुविषयिका प्रेप्सा च भवति, तथैव तेषां प्रथमव्यवसायिनां परप्रेप्साऽपि भवति। अत एव हि 'जानाति इच्छति यतते प्राप्नोति, इति व्यवसायक्रमश्च भवति, इति सर्वदर्शनसिद्धान्तः। इत्थं किल द्वितीयव्यवसायनियता वस्तुत्रयनायकाः षड्वै धर्माश्च विज्ञायन्ते— प्रथमव्यवसायप्रयोजनकैवल्यनिष्ठानां प्रार्थकानां चाऽधिकारिणां स्वरूपनिरूपको धर्मश्च प्रथमः, ततस्तेषामेव स्वेप्सितार्थप्राप्तिसाधनविज्ञानधर्मश्च द्वितीयः, ततस्तदधिकारिणां स्वकर्तव्यव्यवसायनायिकायाश्च शक्तेर्विज्ञानधर्मश्च तृतीयः, तथा तेषां प्रार्थकानां चाऽधिकारिणां स्वनियतशक्तिकार्यव्यवसायाऽवसानकालविज्ञेयो मोक्षविज्ञानधर्मश्च तुरीयः, ततः सर्वकारणपरप्रापकब्रह्मविज्ञानधर्मश्च पञ्चमः, ततश्च प्रार्थकाधिकारिप्राप्यफलब्रह्मविभूतिविज्ञानधर्मश्च कैवल्यरूपः षष्ठः, इति। तत्र च प्रथमे धर्माश्च पञ्च कारणपराः, षष्ठो धर्मश्च कार्यरूप इति विवेकः। एवं धर्मैश्च षड्भिर्गुम्भितो द्वितीयव्यवसायश्च पूर्णः संभवति। कामेच्छासङ्कल्पचिन्ताध्यानभक्तयश्चैताः षडपि द्वितीयव्यवसाय-

मात्रनियता भवन्तीति सिद्धान्तः। यथा वा हि प्रथमव्यवसाय-नियता धर्माश्च पञ्च पञ्चकारणस्वरूपाः, षष्ठश्च कार्यरूपः, तथा-ऽत्राऽपि ते कामादयः, पञ्चकारणरूपाः, षष्ठी भक्तिश्च कार्य-रूपा च भवन्ति। तत श्चात्र स्वरूपधर्मश्च प्रथमो ह्यधिष्ठान-कारणस्वरूपो भवति। स च स्वरूपगीतया ह्यभिवर्ण्यते भगवता। स्वरूपमधिकृत्यैव हि विधयः प्रवर्तन्ते। ततश्चाऽधिकारिणां यथास्वरूपं हि फलं दृश्यते। यथाकालं यथादेशं च सर्वेषां दैवाऽऽसुरस्वरूपे विज्ञायेते। अतः स्वरूपमेव फलप्राप्तये कारणं भवत्यधिष्ठानरूपम्। अतश्च भगवता "तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ" इति स्वरूपगीतान्ते चोपदिश्यते। अत्रायं भावः—ये तु पुनः सच्छास्त्रविहितां शिष्टाचारसिद्धां च सरणिं परित्यज्य स्वव्यवसायाय प्रवर्तन्ते, न ते च स्वेप्सितां सिद्धिं लभन्ते। ते चैवं हि स्वेप्सितां सिद्धिं लभन्ते, ये तु पुनः सच्छास्त्रविधिमनुवर्तन्ते। सिद्धिश्चात्र स्वनियत-व्यवसायसमाप्तिपूर्विका च परप्राप्तिरूपा भवति। ततः शास्त्रमेव ह्यधिकारिणां तादृशसिद्धिप्राप्तियोग्यस्वरूपप्रकारबोधकं भवति, इति। एवमत्र साधनविज्ञानधर्मश्च द्वितीयो भवति। अयं च धर्मः साधनत्रयगीतया व्याख्यातो भवति। सोऽयमधि-कारिणां च सर्वेषां स्वेप्सितार्थसिद्धये चाऽसाधारणकारणरूपत्वेन करणरूपं कारणं भवति। सोऽयं धर्मश्च भवति श्रद्धारूपः। इच्छारूपा च सा श्रद्धा भवति। ततश्चेच्छिकं सर्वमिति श्रूयते। इच्छैव सा ब्रह्म-

णो व्यवसायेऽपि कारणं भवति। तत एव "तदैक्षत बहु स्याम्" इति श्रुतिः। एवं धर्मदर्शनेऽपि, सर्वेषामधिकारिणां स्वेप्सितार्थसिद्धये साधनं भवतीत्युच्यते। अतः सर्वं श्राद्धं भवति। अतश्च भगवताऽपि "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्" इति साधनत्रयगीतान्ते चोपदिश्यते। ततश्चाऽत्राऽधिकारिणां स्वनियतशक्तिविज्ञानधर्मश्च तृतीयो भवति। शक्तिश्च सा यथाधर्ममधिकारिणां व्यवसायस्य नायिका मायापदवाच्या सङ्कल्पनियन्त्री च भवति। सा च मायागीतयाऽभिवर्ण्यते। सोऽयं शक्तिविज्ञानधर्मश्च प्रकृते स्वतन्त्रत्वेन कर्तृस्वरूपकारणं भवति। ततश्च भगवता "मां च योऽव्यभिचारेण भक्तियोगेन सेवते" इति मायागीतान्ते चोपदिश्यते। ततस्तुरीयो मोक्षधर्मश्च भवति। स च प्रारब्धव्यवसायपरित्यागरूपो ब्रह्मविज्ञानजन्यश्चिन्ताकार्यश्च भवति। स च मोक्षगीतया चाऽभिवर्ण्यते। सोऽयमधिकारिभिः पुनरावृत्तिरहितपरप्राप्तिस्वरूपफलाय क्रियमाणत्वेन कर्मस्वरूपकारणं भवतीति विज्ञायते। तत एव भगवता "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्" इति मोक्षगीतान्ते चोपदिश्यते। ततश्च पञ्चमो ब्रह्मविज्ञानधर्मो भवति। ब्रह्मस्वरूपं चात्राऽनुस्मृतिसहितध्यानगम्यं भवति। सोऽयं ब्रह्मस्वरूपविज्ञानधर्मश्च ब्रह्मस्वरूपगीतया चाभिवर्ण्यते। स्वेप्सितार्थप्राप्तये च ब्रह्मस्वरूपविज्ञानधर्मस्य परमकारणत्वेन, स च पञ्चमदैवकारणस्वरूपो भवति, इति विज्ञायते। ततश्च भगवता "तस्मात्सर्वेषु कालेषु

मामनुस्मर युध्य च" इति ब्रह्मस्वरूपगीतान्ते चोपदिश्यते। एवमुपपादिताश्च पञ्च धर्माः कारणस्वरूपाः, इति शुद्धार्यसिद्धान्तः। अथैवमेव द्वितीयव्यवसायफलस्वरूपो ब्रह्मविभूत्याख्यःकैवल्यस्वरूपश्च षष्ठो धर्मो भवति। स च ब्रह्मविभूतिगीतया ह्यभिवर्ण्यते। प्रार्थकानां द्वितीयव्यवसायाधिकारिणां ब्रह्मविभूतिरेव फलं भवति। सा च भक्त्या प्राप्यते। अतश्च भगवता "अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना" इति ब्रह्मविभूतिगीतान्ते चोपदिश्यते। तदेतद्धर्मषट्कोपेतश्च द्वितीयव्यवसायो भवति, इति सिद्धान्तः। किं च योगब्रह्मविद्यास्वरूपायाश्च श्रीभगवद्गीताया द्वितीयपादेऽस्मिंश्च द्वितीयव्यवसायव्याख्यानपरे द्वितीयाश्रमिणां तृतीयाश्रमिणां च धर्माः तद्व्यवसायाङ्गभूताः प्रतिपादिताः, इत्यपि विज्ञायन्ते। एवं भगवता नारदेन—

नारदकारिकाः।

अथ योगब्रह्मविद्या द्वितीयचरणे पुनः।
द्वितीयं तत्त्वकूटं च प्रार्थनालक्षणं मनः॥ ८२॥
तन्महत्तत्त्वबीजं च साहंकारं सविक्रमम्।
व्याख्यातं वासुदेवेन सरहस्यं विविच्य हि॥ ८३॥
द्वितीये तत्त्वकूटेऽस्मिन्क्षेत्रज्ञस्यात्मनश्च हि।
कामेच्छाद्याकरश्चैव तद्वस्तुत्रयनायकः॥ ८४॥

कार्यकारणभावैश्च षड्भिर्धर्मैः समन्वितः ।
द्वितीयो व्यवसायश्च भवेदित्येव निर्णयः ॥ ८५ ॥

तत्र कारणरूपाश्च धर्माः पञ्च सनातनाः ।
षष्ठो धर्मश्च कार्यः स्यात्स फलं स्यादितीर्यते ॥ ८६ ॥

ज्ञानिनां प्रार्थकानां च स्वरूपस्य निरूपकः ।
धर्मो ह्यधिष्ठानरूपो भवेदग्र्यं च कारणम् ॥ ८७ ॥

कार्यसाधनविज्ञानं द्वितीयं कारणं भवेत् ।
करणात्मेति तद्वेद्यं तृतीयं कारणं पुनः ॥ ८८ ॥

भवेच्छक्तिपरिज्ञानं कर्तृरूपं च तद्भवेत् ।
तुरीयं मोक्षविज्ञानं कर्मरूपं च तद्भवेत् ॥ ८९ ॥

ध्येयब्रह्मस्वरूपस्य विज्ञानं यच्च कीर्तितम् ।
तद्भवेद्दैवसंज्ञं च पञ्चमं कारणं भवेत् ॥ ९० ॥

क्षेत्रे तदात्मयोगाच्च जायमानस्य धर्मतः ।
द्वितीयव्यवसायस्य धर्माः पञ्च निरूपिताः ॥ ९१ ॥

सिद्धकारणरूपाः स्युरिति ज्ञेयं मनीषिभिः ।
तथा ब्राह्मी विभूतिश्च कार्यरूपा फलं भवेत् ॥ ९२ ॥

द्वितीयो व्यवसायोऽयं मानसः कामलक्षणः ।
द्वितीयाश्रमिभिश्चैव तृतीयाश्रमिभिस्तथा ॥ ९३ ॥

संसेव्य इति सिद्धान्तः कथ्यते शुद्धयोगिभिः ।
द्वितीयश्च तृतीयश्च पुरुषार्थेष्वयं भवेत् ॥ ९४ ॥

सेव्योऽयं मध्यमे चैव वयसि ह्यधिकारिभिः ।
नियतोऽयं हि सर्वेषां क्षेत्रे क्षेत्रज्ञयोगतः ॥ ९५ ॥
स्वाभाविको यथालोकं यद्यपि स्यात्स्वधर्मतः ।
तथाप्ययं सिद्धये हि वर्णितो धर्मलक्षणः ॥ ९६ ॥
तस्माद्योगब्रह्मविद्याद्वितीयाङ्घ्रिः सनातनः ।
षड्भिश्चैव हि गीताभिः प्रोक्तो भगवता पुनः ॥ ९७ ॥

कुमारकारिकाः ।

अथ द्वितीयषट्कस्य गीतायाश्चैवमेव हि ।
धर्मषट्कस्वरूपत्वं विज्ञेयं स्याद्विचक्षणैः ॥ ११६ ॥
यद्वै महत्तत्त्वबीजं द्विमुखं पञ्चकारणम् ।
तथा चैकफलं ह्येव वस्तुत्रयसमुज्वलम् ॥ ११७ ॥
षड्भिर्धर्मैरुपेतं च तथा ज्ञानेन्द्रियैरपि ।
साहंकारं च तच्च स्यान्मनस्तत्त्वकुलं भवेत् ॥ ११८ ॥
तन्मनस्तत्त्वचक्रं च कार्यकारणलक्षणम् ।
प्रवृत्तिपरया चैव निवृत्तिपरया तथा ॥ ११९ ॥
दक्षिणया चोत्तरया गत्या हि भ्रमतेऽनिशम् ।
द्वितीये तत्त्वचक्रेऽस्मिन्प्रार्थनालक्षणस्तथा ॥ १२० ॥
सर्वेषां देहिनां चैव कारणं बन्धमोक्षयोः ।
द्वितीयो व्यवसायश्च धर्मैः षड्भिः समन्वितः ॥ १२१ ॥

वस्तुत्रयनायकश्च कामार्थपरभावनः ।
संभवेदिति विज्ञेयं शुद्धयोगाऽधिकारिभिः ॥ १२२ ॥
तत्त्वचक्रे द्वितीयेऽस्मिन्ये स्युर्धर्माश्च षट् पुनः ।
तेषु कारणरूपाः स्युः पञ्च धर्माः परायणाः ॥ १२३ ॥
षष्ठो यश्च परो धर्मः कार्यरूपः स चोच्यते ।
प्राप्यविज्ञानरूपश्च प्राप्यविज्ञानमत्र हि ॥ १२४ ॥
परपुरुषविभूतिविज्ञानं स्यादितीर्यते ।
तस्माद्विभूतिविज्ञानाद्बन्धमोक्षौ सनातनौ ॥ १२५ ॥
स्वाधीनौ च भवेतां हि सर्वेषामधिकारिणाम् ।
षड्भिरेतैश्च धर्मैस्तु पूर्णश्चैव हि राजते ॥ १२६ ॥
द्वितीयो व्यवसायश्च तेषु धर्मेषु पञ्च हि ।
प्रथमाः कारणरूपाश्चेत्थं ज्ञेया मनीषिभिः ॥ १२७ ॥
प्रथमे चरणे ये च कथिता ह्यधिकारिणः ।
तेषां चैव प्रार्थकानां द्वितीये चरणे पुनः १२८ ॥
यो वै निरूपको धर्मः स्वरूपस्य विविच्य हि ।
प्रथमश्च भवेत्सोऽयं स्याद्दैवाऽऽसुरलक्षणः ॥ १२९ ॥
अधिष्ठानस्वरूपश्च स भवेदिति निर्णयः ।
सोयं हि शास्त्रविज्ञानजन्य इत्युच्यते बुधैः ॥ १३० ॥
प्रथमेणैव धर्मेण सर्वेषामधिकारिणाम् ।
अधिकारस्वरूपं च निर्णेयमिति निर्णयः ॥ १३१ ॥

तत्र द्वितीयो धर्मः स्यात्साधनज्ञानलक्षणः ।
सोऽयं करणस्वरूपो भवेदिति निगद्यते ॥ १३२ ॥
ततस्तृतीयधर्मश्च कर्तृविज्ञानलक्षणः ।
व्यवसायस्य कर्त्री या सा शक्तिरिति निर्णयः ॥१३३॥
ब्रह्मणश्चैव या शक्तिर्योगदेवी महेश्वरी ।
सा स्याद्देवी च कल्याणी सरूपा चेति कथ्यते ॥१३४॥
सेयं स्यात्सर्वसंसारव्यवसायस्य नायिका ।
स्वातन्त्र्याच्चैव कर्त्री च भवेदिति निगद्यते ॥ १३५ ॥
ततस्तुरीयो धर्मश्च मोक्षविज्ञानलक्षणः ।
भवेत्कार्यस्वरूपश्च सोऽयमित्येव निर्णयः ॥ १३६ ॥
द्वितीये व्यवसायेऽस्मिन्धर्मो यश्च हि पञ्चमः ।
ब्रह्मस्वरूपविज्ञानरूपः सोयमितीर्यते ॥ १३७ ॥
ध्येयं ब्रह्मस्वरूपं तद्द्वितीयव्यवसायिभिः ।
दैवविज्ञानरूपत्वात्कारणं स्याच्च पञ्चमम् ॥ १३८ ॥
या स्याद्ब्रह्मविभूतिश्च तस्या विज्ञानमेव हि ।
षष्ठधर्मस्वरूपं च कार्यरूपं तदुच्यते ॥ १३९ ॥
बन्धमोक्षौ गृहे स्यातां देहिनां च यथैव हि ।
तथैव तौ भवेतां हि तत्त्वे मनसि चात्मनः ॥ १४० ॥
ततो मनस्तत्त्वकूटप्रविष्टः क्षेत्रवित्पतिः ।
कथ्यते गृहमेधीति तत्त्वज्ञैर्योगिभिः स्वयम् ॥ १४१ ॥

तस्माद्गार्हस्थ्यधर्मश्च बन्धमोक्षस्वभाववान् ।
द्वितीयो व्यवसायः स्यादिति शुद्धैर्निगद्यते ॥ १४२ ॥
तस्माद्द्वितीयषट्कस्य द्वितीयव्यवसायिनः ।
धर्मषट्कस्वरूपत्वं गीतायाः स्यादितीर्यते ॥ १४३ ॥
बन्धमोक्षार्थिभिश्चैव गृहस्थैरधिकारिभिः ।
भवेक्षट्कं द्वितीयं स्याद्विज्ञेयमिति निर्णयः ॥ १४४ ॥

इति, भगवता कुमारेणाऽपि योगब्रह्मविद्यास्वरूपायाः श्रीभगवद्गीतायाः, प्रार्थनालक्षणस्य भक्तिपरस्याऽस्य च द्वितीयपादस्य, स्वरूपधर्मादिधर्मषट्कस्वरूपत्वं च भवति व्याख्यातम् । एवं सनातनधर्मदीपिकायामपि—

"मन इत्याख्यया यच्च द्वितीयं तत्त्वमण्डलम् ।
तस्य स्वरूपमित्थं हि वर्ण्यते पूर्वसूरिभिः ॥
तदव्यक्तमहद्युक्तमहंकारेन्द्रियोज्वलम् ।
इन्द्रियं हि मनो यच्च द्वितीयं तत्त्वमण्डलम् ॥
प्रार्थनालक्षणं चेति धर्मास्तत्र महर्षयः ।
कामश्चेच्छा च सङ्कल्पश्चिन्ता ध्यानं तथैव हि ॥
भक्तिश्चेति षडेते च मानसाः स्युः स्वभावतः ।
धर्मैरेतैश्च षड्भिस्तु व्यवसायश्च मानसः ॥
भवेत्क्षेत्रज्ञयोगेन जायते तत्त्वमण्डले ।
इति शुद्धार्यसिद्धान्तो विज्ञेयो योगिभिर्भवेत् ॥

तदेतत्तत्त्वकूटं च द्वितीयं क्षेत्रलक्षणम्।
प्रवृत्तिपरया चैव निवृत्तिपरया तथा॥
गत्या च समाविष्टस्य क्षेत्रज्ञस्याऽऽत्मनश्च हि।
स्वरूपं द्विविधं चैव दृश्यते तत्त्वलक्षणम्॥
तद्वै मनस्तत्त्वनाम्ना व्याख्यातमिति बुद्ध्यते।
यथा नसिति शब्देन क्षेत्रज्ञस्य तदात्मनः॥
बद्धं सशक्तिकं चैव व्यवसायपरं च यत्।
स्वरूपं तच्च कथितं मकारेण तु तस्य वै॥
अबद्धं च स्वरूपं तु विशुद्धं कथितं भवेत्।
इत्यत्र चान्यद्वक्तव्यं तच्च सर्वं विशेषतः॥
व्याख्यातं स्यात्पूर्वमेव ततश्च मुनिपुङ्गवाः।
द्वितीयो व्यवसायश्च विज्ञेयः स्यान्मनीषिभिः॥
द्वितीयं तत्त्वकूटं च कामेच्छाद्याकरं च यत्।
मनोमयकोशरूपं तद्भवेदिति निर्णयः॥
द्वितीये तत्त्वकूटेऽस्मिन्कोशे चैव मनोमये।
परमं कारणं यच्च द्वितीयव्यवसायिभिः॥
सेव्यं च सर्वेष्वर्थेषु सत्स्वरूपेण संस्थितम्।
सगुणं रम्यरूपं च मायिकं ध्यानगोचरम्॥
यथाधिकारं सर्वेषां दिव्यदृष्टेश्च गोचरम्।
बीजाक्षरप्रभावाच्च साङ्गं परिणतं तथा॥

नामरूपादिभिश्चैव व्यवहार्थं विभूतिमत् ।
तद्ब्रह्म समुपास्यं स्याद्भक्तैश्चैव हि योगिभिः ॥
एवं च वर्णितं ब्रह्मस्वरूपं च सशक्तिकम् ।
बद्धं च व्यवसायस्य नायकं चेति निर्णयः ॥
तद्वै नसिति शब्देन वर्णितं स्यादितीरितम् ।
अत्र शुद्धं च यद्ब्रह्म तन्मकारेण कीर्तितम् ॥
तस्माच्च वासुदेवेन प्रोक्तं पार्थाय धीमते ।
ब्रह्मस्वरूपगीतान्ते त्वेवं वै मुनिपुङ्गवाः ॥
"अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥"
इति चात्र रहस्यार्थो विज्ञेयोऽस्त्येवमेव हि ।
श्लोकद्वयस्य पूर्वार्धे बद्धं ब्रह्माऽभिवर्णितम् ॥
उत्तरार्धे ह्यबद्धं च शुद्धं ब्रह्माऽभिवर्णितम् ।
ततो मनोमयः कोशः स्याच्छुद्धाऽशुद्धलक्षणः ॥
इत्यतश्चैव शुद्धेऽस्मिन्कोशे चैव मनोमये ।
भक्त्या यः प्रार्थको ब्रह्म शुद्धं जानाति तत्त्वतः ॥
स भवेत्सर्वविच्चैव परमं पुरुषं तथा ।
अभ्यासेन विजानाति भूतिं ब्राह्मीं तथाश्नुते ॥

अतश्चाऽस्मिन्द्वितीये च तत्त्वकूटे मनोमये।
द्वितीयो व्यवसायश्च धर्मैः षड्भिः समन्वितः॥
भवेदिति हि सिद्धान्तः शुद्धाचार्यानुशिक्षितः।
ततो ज्ञानात्परो भक्तिव्यवसायश्च गीयते॥
इति चैवं तत्त्वकूटं द्वितीयं चाभिवर्णितम्।
मया हि तच्च विज्ञेयं विशेषेण महर्षिभिः॥"

इति, द्वितीयतत्त्वकूटस्वरूपं च विशेषतो ह्यभिवर्णितं भवति। तस्मादेवमुपपादितप्रमाणवचनैश्च योगब्रह्मविद्यास्वरूपायाश्च श्रीभगवद्गीताया द्वितीयषट्कस्य वस्तुत्रयनायकस्वरूपधर्मादिधर्मषट्कोपेतत्वं षडध्यायनिबद्धत्वं च भवति, इति शुद्धार्यसिद्धान्तः।

अथ तृतीयं चेन्द्रियतत्त्वकूटं भवति। तस्य च प्रथमद्वितीयव्यवसायसञ्जातत्वं स्वेतरसमस्ततत्त्वोपहितत्वं तृतीयपादगतिमत्त्वं विकृत्यात्मकत्वं चावगम्यते। तदेतदिन्द्रियकूटस्वरूपस्य च क्षेत्रस्य तदात्मनः क्षेत्रज्ञस्य च, सति च स्वनियतशक्त्या हि योगे, तस्मिन्नेवेन्द्रियतत्त्वकूटे च वस्तुत्रयनायकः कर्मव्यवसायो धर्मषट्कोपेतोऽधिकारिलक्षणश्च भवतीति विज्ञायते। अतः कर्माधिकरणमिन्द्रियतत्त्वकूटं भवतीति सिद्धान्तः। किं चाऽधिकारिलक्षणानां विशुद्धज्ञानकामप्रभवानां तदेतेषां च कर्मणामेव तद्विशुद्धयज्ञस्वरूपत्वं चाप्यवगम्यते। अत एवाऽनुगीतायां च तदिन्द्रियाणां होतृस्वरूपत्वं तदिन्द्रियकार्याणां शब्दादीनां च

गुणानां हविःस्वरूपत्वं तथा तद्देवतारूपाणां दिगादीनां चाऽग्निस्वरूपत्वं तेषां च परस्परं गुणानां ह्यनभिज्ञत्वं तेषां स्वकार्ये कर्मणि च युक्तत्वं सत्यर्थसन्निकर्षे च तत्त्वानां च सर्वेषां तदिन्द्रियाणामेव प्राधान्यं चेत्यादिकं व्याख्यातम्। एवम्—

"अगारमद्वारमिव प्रविश्य
संकल्पभोगान्विषयानविन्दन्।
प्राणक्षये शान्तिमुपेति नित्यं
दारुक्षयेऽग्निर्ज्वलितो यथैव ॥
कामं तु नष्टेषु गुणेषु सङ्गः
कामं च नान्योन्यगुणोपलब्धिः।
अस्मान्विना नास्ति तपोपलब्धि-
स्तामप्यृते त्वां न भजेत्प्रहर्षः ॥"

इत्यनुगीतायां च तदिन्द्रियाणामेव तपस्साधनत्वं च व्याख्यातम्। अत्र तपःशब्देन च कर्मव्यवसायफलं च सन्न्यास एव गृह्यते, तस्यैव प्राणायामादिपरमहंसस्वरूपान्तस्य कारणरूपधर्मपञ्चकस्य च कर्मव्यवसायस्य षष्ठकार्यधर्मस्वरूपत्वेन प्रतिपादनात्। किंच यथा वा हि रथिनः समर्थाः स्वरथानुबद्धैः स्वाधीनैश्चाश्वैर्दीर्घमध्वानं च समतीत्य परं हि स्थानं समाश्रयन्ते, तथैवाधिकारी च स्वविशुद्धज्ञानमनःस्वाधीनैरिन्द्रियैरेव नियतं च स्वव्यवसायं यथाविधि यथाक्रमं च परिसमाप्य विधूतमुक्तसंसारव्यवसाय-

बन्धः शान्तः सन्यासी च परं स्थानं हि समाश्रयते, इत्यधिकारिणां संसारव्यवसायनिर्वाहप्रकारश्च सर्वासु च ब्रह्मविद्यासु विशेषतो व्याख्यातो भवतीति विज्ञायते। तस्मादिन्द्रियाणामेव कर्मव्यवसायनिर्वाहकत्वं च सिद्धं भवति। इत्थं हि कर्मव्यवसायानुगताः षड्धर्माश्च विज्ञायन्ते—प्राणायामधर्मः, परमात्मधर्मः, अक्षरधर्मः, राजविद्याधर्मः, परमहंसधर्मः, सन्यासधर्मः, इति। तत्र हि तृतीयेन्द्रियतत्त्वकूटनियते च कर्मव्यवसाये तत्कर्मकारणस्वरूपश्च प्राणायामधर्मः प्रथमो भवति। स च परभावाभिसिद्धिसंपादनकर्मरूप इति शुद्धार्यसिद्धान्तः। तत्परभावाभिसिद्धेश्च 'विशुद्धपरसर्वभावानां स्वात्मस्वरूपे ब्रह्मणि सत्त्वेन समानयनम्, समानीतानां च तेषां भावानां स्वात्मस्वरूपब्रह्मस्वभावसिद्धत्वेन चैक्यस्य विज्ञानम्, तदैक्यविज्ञानप्रतिबन्धकनानाभावपरित्यागः, इत्यङ्गानि च त्रीणि भवन्ति। तदभिवर्णितानां च तेषामङ्गानां यथाक्रमं हि 'पूरकं कुंभकं रेचकम्, इति संज्ञयापि व्यवहारश्च दृश्यते। यद्यपि श्वासप्रश्वासगत्योस्त्याग एव प्राणायामः, योगविद्यासु तथैव प्रतिपादितत्वादिति वक्तुं शक्यम्, तथापि कर्मव्यवसायस्य योगब्रह्मविद्यादृष्टचैवात्र व्याख्येयत्वेन तदनुरूपप्राणायामधर्मस्यैवाधिकारिभिर्विज्ञेयत्वेन च तद्योगविद्याप्रतिपादितस्य केवलं वायव्यस्य च श्वासप्रश्वासगतित्यागरूपस्य तस्य प्राणायामस्य योगाङ्गत्वेऽपि तदेतस्य प्राकृतत्वेन तावता तस्य राजयोगाधिकारिभिस्त्याज्यत्वस्य प्रतिपादनेन च तदभि-

वर्णितप्राणायाम एवात्र प्रथमधर्मस्वरूपत्वेन वक्तुं युक्त इति सिद्धान्तः। नचैवमभिवर्णितः प्राणायामधर्मश्च न कुत्रापि प्रतिपादित इति वाच्यम्, योगदर्शनेषु च योगविशेषार्थप्रतिपादनपरेषु 'पूरकात्सायुज्यम्, कुंभकात्सामीप्यम्, रेचकादविद्यानिवृत्तिपूर्विका शुद्धाद्वैतसिद्धिः, इति तदभिवर्णितप्राणायामधर्मफलस्य प्रतिपादनात्। अत एव हि भगवता योगरहस्ये चेत्थम्—

"अथातः प्राणायामांश्च व्याख्यास्यामि यथाविधि।
त्रिविधास्ते भवन्तीति शुद्धयोगानुशासनम्॥
विचार्यमाणे ते चाऽपि सन्त्यनन्ता फलप्रदाः।
सामान्यतश्च तेषां हि त्रैविध्यमिह कीर्तितम्॥
प्राकृतश्च तथात्मीयः शुद्धश्चेति च भेदतः।
त्रैविध्यमपि तस्य स्यात्प्राणायामस्य धर्मतः॥
तत्रापि प्राकृतश्चैव द्विविधः स्यादितीर्यते।
तयोः स्वरूपमेवं हि व्याख्यातं श्रुतिभिर्भवेत्॥
यथासंख्यानियमं च यथाकालं यथाविधि।
यत्र स्युर्मन्त्रबीजानि नियताङ्गुळिभिः पुनः॥
नासाद्वारं पिधायैव यत्र वायोर्महीयसः।
पूरणं कुंभनं चैव रेचनं चैव दृश्यते॥
सोऽयं भवेत्प्राकृतश्च प्राणायामो भवेत्तथा।
सोऽयं मन्त्रजपाच्चापि पूजायाश्च तथैव हि॥

धर्मसंस्कारकर्मभ्यस्तथा ह्यन्येभ्य एव च ।
कर्मभ्यो वैदिकेभ्यश्च कार्यश्च प्रथमं भवेत् ॥
सोऽयं सगर्भः सगुणो भवेदिति च निर्णयः ।
देवताध्यानपूर्वत्वाद्विना चाध्यात्मदर्शनम् ॥
तथा च केवलं कर्मस्वरूपत्वाच्च तस्य हि ।
प्राकृतत्वं भवेदेवं स पुण्यफलदो भवेत् ॥
खेचरत्वादिकां सिद्धिं चेप्सद्भिरधिकारिभिः ।
यथाधिकारमात्मानं विजानद्भिर्महर्षिभिः ॥
यत्र च श्वासप्रश्वासगतिः संत्यज्यते पुनः ।
मात्रासंख्यानियमेन सोऽयं स्यात्प्राकृतोऽपरः ॥
सोऽयं हि निर्गुणश्चैवं निर्गर्भः स्यादितीर्यते ।
एवं हि नामभिश्चायं बहुभिः समुदीर्यते ॥
अस्यापि केवलं कर्मस्वरूपत्वात्तथैव हि ।
त्यक्तत्वाद्राजयोगज्ञैः स निषिद्ध इतीर्यते ॥
इति चाथ द्वितीयश्च प्राणायामो यथाविधि ।
आत्मज्योतिर्दिदृक्षद्भिरित्थं स्यात्समुपासितः ॥
महत्प्रज्ञां विशुद्धां च विषयेषु विकर्षताम् ।
सङ्कल्पादिप्रभूतानां चेन्द्रियाणां गतिः पुनः ॥
निरुद्धा येन चैकाग्र्यसिद्धये मनसश्च हि ।
सोऽयमात्मीयनामा च प्राणायामो भवेदिति ॥

स्वात्मारामैर्योगिभिश्च कथ्यते च विशेषतः ।
महता सह योगश्च मनसोऽस्मात्प्रजायते ॥
सोऽयं निवृत्तिधर्माणां योगानां च स्वभावतः ।
संभवेदङ्गभूतश्च मुख्यश्चैव विशेषतः ॥
अयं चैवात्मयोनिः स्याच्छुद्धसङ्कल्पलक्षणः ।
अनेन पाशनिर्मोको भवेदिति च निर्णयः ॥
इति चाथ तृतीयश्च प्राणायामः सुखावहः ।
यः शुद्धलक्षणश्चैव सोऽयमित्थं निगद्यते ॥
सत्त्वमात्मनि सर्वेषां येन जानन्ति योगिनः ।
येन वै ब्रह्मसंस्पर्शो ब्रह्मसामीप्यलक्षणः ॥
जायते येन शान्तिं च महानिर्वाणलक्षणाम् ।
प्राप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
व्यवसायेषु सर्वेषु जीवभूतः सनातनः ।
दृष्ट्या विजातीयया च बुध्यते चाधिकारिभिः ॥
येन जानन्ति चात्मानं स्वतन्त्रं व्यवसायिनः ।
सोऽयं शुद्धश्च सुमुखः प्राणायामो भवेत्तथा ॥
प्राणायामाश्च सर्वेऽपि वर्णिता येऽत्र धर्मतः ।
ते यथानुभवं चैव वर्णिता इति निर्णयः ॥
इत्थमेवात्र तत्त्वं हि परं शुद्धं सनातनम् ।
गुप्तं भवति सर्वेषु दर्शनेषु महर्षिभिः ॥

स्वज्ञानं प्रथमं चैव सर्वेषां व्यवसायिनाम् ।
मुख्यमित्येव सिद्धान्तो मया चैवेह चोदितः ॥
स्वज्ञानपूर्वकं चैव क्रियमाणे महर्षिभिः ।
सर्गे च प्रथमे प्रोक्तः प्राणायामो हि शिक्षया ॥
तस्माद्यथाधिकारं च धर्मः स्वज्ञानलक्षणः ।
तथा कैवल्यमूलं च यश्च स्वातन्त्र्यलक्षणः ॥
सर्वार्थदः सर्वसेव्यः परभावाभिसिद्धिदः ।
यथासंसारकार्यं च निर्दुष्टः शुद्धलक्षणः ॥
शुद्धैः सुशिक्षितश्चैव तथा सद्भिरनुष्ठितः ।
सोयं प्राणायामधर्मो भवतीति च बुध्यते ॥
इति विज्ञाय तत्त्वं तु प्राणायामस्य धर्मतः ।
प्राणायामाश्च सर्वेऽपि कार्या इति हि निर्णयः ॥
योगिनां कर्मिणां चैव तथा चैवार्थिनामपि ।
ज्ञानिनां च तथान्येषां क्रियमाणेषु धर्मतः ॥
सर्वधर्मेषु चैवाऽयं प्रथमश्चेति निर्णयः ।
तस्मात्सेव्योऽयमेव स्याद्यथातत्त्वं हि साधुभिः ॥"

इति, प्राणायामधर्मस्वरूपं च साङ्गं विविच्य व्याख्यातं भवतीति विज्ञायते । एवमेव हि "योगपरेषु सर्वेष्वप्यध्यात्मदर्शनेषु च 'प्राकृतः आत्मीयः शुद्धः, इति प्राणायामधर्मस्य त्रैविध्यम्, त्रिविधानां च तेषां प्रत्येकं हि 'पूरकं कुंभकं रेचकम्, इति

त्रैविध्यम्, तत्पूरककुंभकरेचकानां हि—सोमसूर्याग्नयः, इडापिङ्गळासुषुम्नाः, दक्षिणायनोत्तरायणपरायणानि, ब्रह्मविष्णुमहेश्वराः, सरस्वतीमहालक्ष्मीमहेश्वर्यः, सावित्रीगायत्रीश्वर्यः, ज्ञानशक्तीच्छाशक्तिक्रियाशक्तयः, सगुणनिर्गुणशुद्धाः, प्रकृतियोन्यात्मयोनिब्रह्मयोनयः, सगर्भनिर्गर्भपूर्णगर्भाः, अकारोकारमकाराः, इत्यादिसंज्ञाः, सर्वास्वपि देवतापूजासु सर्वेष्वपि श्रौतस्मार्तकर्मसु च प्रथमं कर्तव्यत्वेन विहितः समन्त्रो नियतजपसंख्याकश्च यो भवति, यश्च पुनः खेचर्यादिसिद्धिकामनया क्रियमाणो नियतमन्त्रः केवलं वायव्यकर्मरूपो भवति, तावुभावपि प्राकृतप्राणायामस्वरूपौ भवत इति, यश्च पुनरात्मविज्ञानमूलको विजितेन्द्रियत्वलक्षणो मुनिभिरनुष्ठेयत्वेन विहितश्च, सोऽयमात्मीयप्राणायम इति, यश्च पुनः 'सर्वं तत्खल्विदं ब्रह्म सर्वब्रह्मस्वभावजं सर्वमावश्यकम्, इति विशुद्धभावनाप्रधानः सद्राजयोगिभिरनुष्ठेयत्वेन विहितश्च, सोऽयं शुद्धः प्राणायामो भवति " इति च, प्राणायामधर्मस्वरूपं च विविच्य व्याख्यातं भवति। किं च प्राणशब्दस्य—

"प्राणो भवेत्परं ब्रह्म जगत्कारणमव्ययम्।
प्राणो भवेत्तथात्मा च ज्ञानकोशगतोऽव्ययः॥
क्षेत्रज्ञश्च तथा प्राणाः पञ्च भूतेन्द्रियार्थकाः।
प्राणार्थाश्चेति सिद्धान्तः श्रुतिभिः समुदीरितः॥"

इति, प्राणायामदीपिकायां वाच्यार्थस्य प्रतिपादानात्तदभिवर्णित-प्राणायामधर्मस्य त्रैविध्यं च युक्तमेवेति विज्ञेयम्। अत एवेत्थं महाभारते महेश्वरेण—

"योगिनामेष मार्गस्तु पञ्चस्वेतेषु तिष्ठति।
जितश्रमः समासीनो मूर्धन्यात्मानमादधेत्॥
मूर्धन्यात्मानमाधाय भ्रुवोर्मध्ये मनस्तथा।
संनिरुध्य ततः प्राणानात्मानं चिन्तयेत्परम्॥
प्राणे त्वपानं युञ्जीत प्राणांश्चापानकर्मणि।
प्राणापानगती रुध्वा प्राणायामपरो भवेत्॥
एवमन्तःप्रयुञ्जीत पञ्चप्राणान्परस्परम्।
विजने संमिताहारो मुनिस्तूष्णीं निरुच्छ्वसन्॥
अश्रान्तश्चिन्तयेद्योगी उत्थाय च पुनः पुनः।
तिष्ठन्गच्छन्स्वपन्वापि युञ्जीतैवमतन्द्रितः॥
एवं नियुञ्जतस्तस्य योगिनो युक्तचेतसः।
प्रसीदति मनः क्षिप्रं प्रसन्ने दृश्यते परम्॥
विधूम इव दीप्तोग्निरादित्य इव रश्मिमान्।
वैद्युतोग्निरिवाकाशे पुरुषो दृश्यतेऽव्ययः॥
दृष्ट्वा तदात्मनो ज्योतिरैश्वर्याष्टगुणैर्युतः।
प्राप्नोति परमं स्थानं स्पृहणीयं सुरैरपि॥"

इति, प्राणायामधर्मश्च सफलो व्याख्यातो भवति। अत्र 'पञ्चस्वेतेषु तिष्ठति, इत्यनेन योगानामपि सर्वेषां धर्मस्य प्राणायामाधीनत्वं चाभिहितं भवति। एवं 'मूर्धन्यात्मानमाधाय, इत्यनेन तदात्मज्योतिषः साक्षात्कारस्य साधनं शुद्धदीक्षासमये च भगवन्नारायणदत्तं शुद्धाचार्यानुग्रहीतं च शुद्धतेजोपहितं योगबीजं ब्रह्मरन्ध्रे धृत्वा, इत्यर्थः कथितो भवति। एवं च ब्रह्मरन्ध्रे भगवद्दत्तं योगबीजं च तेजः संप्रपद्यैव हि, ततो योगेन स्वात्मस्वरूपब्रह्मसामीप्यं तथा शुद्धाद्वैतनिष्ठैः संप्राप्यं शुद्धब्रह्मसामीप्यं च योगिनो भजन्ते, इति शुद्धार्यसिद्धान्तः। एवं 'सन्निरुध्य' इत्यारभ्य 'एवं नियुञ्जतस्तस्य, इत्यन्तं चात्र प्राणायामधर्मश्चाभिवर्णितस्त्रिविधोऽपि प्राणायामधर्मरहस्यार्थविद्भिरवगन्तव्यो भवतीति विज्ञायते। ततश्च 'प्रसीदति मनः, इत्यारभ्य प्राणायामधर्मपराणां फलं चात्राभिवर्णितमिति विज्ञेयम्। अत एव च तदभिवर्णितप्राणायामधर्मपराणां तादृशधर्माचरणेन मुक्तानां चाधिकारिणां स्वरूपं तन्मुक्तिफलं चेत्थम्—

"सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः
सक्तेन सङ्गधर्मा च समेत्य भवति स्वयम् ॥
निस्सङ्गेन समेत्यैव निस्सङ्गात्मा भवेत्तथा।
परेण परधर्मा च भवत्येष समेत्य वै ॥
शुद्धेन शुद्धधर्मा च समेत्यामलदीप्तिमान्।
बुद्धेन बुद्धिमांश्चैव समेत्य च तथा भवेत् ॥

मुक्तेन मुक्तधर्मा च समेत्य पुरुषर्षभ ।
वियोगधर्मिणा चैव वियोगात्मा समेत्य हि ॥
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥
तथा च केवलेनैव केवलात्मा समेत्य हि ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ ''

इति, भगवता भीष्मेण धर्मसूत्रं प्रत्युपदिष्टमिति महाभारतादवगम्यते । अत्र हि ये च तदात्मनः स्वभावसिद्धा धर्माः 'सक्तत्वाऽसक्तत्वपरत्वशुद्धत्वबुद्धत्वमुक्तत्ववियोगित्वविमोक्षित्वविमलत्वकेवलत्वस्वतन्त्रत्वादयः, ते सर्वेऽपि ब्रह्मविद्याधिकारिभिः क्रमेण प्राप्यन्ते, इति प्रतिपादितं भवति । किं च प्राणायामधर्मेष्वपि च त्रिषु वायव्यस्य च कर्मणो विद्यमानत्वं चैतदर्थकमेवेति सनातनधर्मदीपिकायामित्थमभिवर्णितं भवति—

" प्राणायामाद्भवेन्नाडीशुद्धिर्देवांशदायिनी ।
यया सर्वाणि भूतानि स्वात्मीये विग्रहे पुनः ॥
दासः पश्यति धर्मात्मा बुद्ध्या चैव विशुद्धया ।
तथा दर्शनसंभूतं नानात्वं स्वात्मनि स्थितम् ॥
सम्यक्परीक्षया चैव विशोध्य च मुहुर्मुहुः ।
त्यजेद्दासो यया शुद्ध्या सा नाडीशुद्धिरिष्यते ॥

अङ्गानि पूरकादीनि प्राणायामस्य यानि च।
तेषामर्थस्तु बहुधा व्याख्यातोऽस्ति महर्षिभिः ॥
इत्थं हि तेषामर्थश्च शुद्धयोगिभिरुच्यते।
योगशास्त्ररहस्यार्थाभिज्ञैश्च पूर्वसूरिभिः ॥
पूरकाख्यं परं चाङ्गं प्राणायामस्य कथ्यते।
एकस्मिंश्च विशुद्धे हि सत्त्वे देवे परात्मनि ॥
सर्वेषां चैव भावानां पूरणाच्च यथाक्रमम्।
स्वतेजसा शरीरं च द्वितीयं पूरकं भवेत् ॥
क्षेत्रज्ञस्य च तस्माद्धि वायुः स्यात्पूरकाभिधः।
यदन्नमयं शरीरं तदेकस्थं न चाल्यते ॥
शरीरं यत्प्राणमयं तच्च सर्वत्र गच्छति।
ततश्च सर्वभावानां वायुना पूरणं वरम् ॥"

इति। ततश्च तदभिवर्णितप्राणायामधर्मेष्वपि च त्रिविधेषु वाय-व्यस्य कर्मणो नियमेन सत्त्वं चापि विज्ञायत एव, यतः कर्मव्य-वसायपराणां चाधिकारिणां प्राणकोशेनैव क्रमेण ज्ञानकोशे च सर्वभावानां समानयनस्यानुभवसिद्धत्वेन युक्तत्वात्। परं तु शुद्धा-त्मीयप्राणायामयोर्वायव्यस्य च कर्मणो ह्यल्पत्वमेवेति सिद्धान्तः। किं चान्नकोशात्मिकायाः प्रकृतेश्च स्वेतरपदार्थसन्निकर्षायोगा-त्प्राणकोशात्मिकायाश्च तस्याः पदार्थान्तरसन्निकर्षसंभवाच्च प्राण-कोशोपहितैरेव कर्मभिः परभावाभिसिद्धिश्च भवति, इति निर्णया-

दयो ह्याचार्या वदन्ति। किं च कर्मणां प्राणकोशोपहितत्वं हि तदेकरूपप्राणमनोविज्ञानधर्मयुक्तत्वमेव। अतश्चात्मीयप्राणायामे न सर्वथा वायव्यकर्मणां त्यागः, परं तु यावदपेक्षितं स्वाचार्योपदिष्टक्रमं च कर्म वायव्यं गृह्यत एव, इति टङ्कादयो विदुः। अन्यच्चात्र वक्तव्यं यथाप्रकरणमग्रे व्याख्यातं भविष्यति। तस्मात्कर्मव्यवसायनियतेषु च षट्सु धर्मेषु प्राणायामधर्मश्च प्रथमो भवतीति शुद्धार्यसिद्धान्तः। अयं च पुनः प्राणायामगीतया ह्यभिधीयते। अथ तत्र परमात्मधर्मश्च द्वितीयो भवति, स च परमात्मगीतया चाभिधीयते। तदभिवर्णिता च परभावाभिसिद्धिस्तपरभावविज्ञानेन भवति। परभावश्च भवति परमात्मा च दैवीप्रकृतिभावितः। अतः परभावश्च परमात्मा, तद्विज्ञानधर्मश्चात्र द्वितीयो भवतीति सिद्धान्तः। ततश्चात्र तृतीयो भवत्यक्षरविज्ञानधर्मः, स चाक्षरगीतया ह्यभिधीयते। यश्च परमात्मनोऽपरभावः शुद्धाऽशुद्धलक्षणस्तत्तत्संसारव्यवसायनायकश्च, सोऽयमक्षरगीतयाभिवर्णितो भवति। ततस्तद्धर्मविज्ञानं तृतीयमिति सिद्धान्तः। ततश्चात्र राजविद्याधर्मस्तुरीयो भवति, स च राजविद्यागीतया ह्यभिधीयते। सोऽयमेव परभावाभिसिद्धिसंपादनपराधिकारिलक्षणकर्मणश्च शिक्षको राजविद्यावधेयश्च भवतीति सिद्धान्तः। ततश्चात्र पञ्चमश्च परमहंसधर्मः, स च परमहंसगीतया ह्यभिधीयते। सोऽयमेव परभावाभिसिद्धिसंपादनपराणामधिकारिणां च स्वरूपस्य निरूपको भवतीति सिद्धान्तः। ततश्चात्र

षष्ठो भवति सन्यासधर्मः, स च सन्यासगीतया ह्यभिधीयते। पूर्ववदस्मिन्कर्मव्यवसायेऽपि व्यवसायनायकं वस्तुत्रयं चावगम्यते 'आत्मा शक्तिः प्रकृतिः, इति। अत्र च षण्णां धर्माणां हि पञ्चानां च तेषां कारणस्वरूपत्वम्, षष्ठस्य च कार्यफलस्वरूपत्वं चाप्यवगम्यते। अत्र हि प्रथमेषु पञ्चधर्मेषु च कारणस्वरूपेषु प्रथमः प्राणायामधर्मश्च परभावाभिसिद्धिसंपादनकर्मलक्षण कारणस्वरूपो भवतीत्यवगम्यते। अत एव "योगिनामपि सर्वेषाम्" इत्यादिप्राणायामगीताचरमश्लोकेन 'युक्ततमः' इति परभावाभिसिद्धिमतां स्वरूपं च भगवतैवोपदिश्यते। अत एव च "विना हि परभावाभिसिद्धिं च व्यवसायं कर्मपरं च समधिष्ठितानामधिकारिणां न भवति च कर्मव्यवसायफलं च शुद्धिरूपः सन्यासः" इति भगवान्टङ्काचार्यश्चाह। अत एव हि भगवता सन्यासगीतायाम्—

"सन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥"

इति। अत्र 'सर्वभूतात्मभूतात्मा, इत्यनेन तत्परभावाभिसिद्धिश्च सन्यासहेतुरभिवर्णिता भवति। अत्र च योगशब्देन राजयोगस्य ग्रहणम्, राजयोगस्य च प्राणायामधर्मश्च प्रथमाङ्गभूतः, इत्यन्य-

त्र व्याख्यातम्। एवं द्वीतीयः परमात्मस्वरूपविज्ञानधर्मश्च दैव-विज्ञानकारणरूपो भवति। अत एव "न तद्भासयते सूर्यः" इत्यादिपरमात्मगीताचरमश्लोकेन परभावस्तत्परभावविज्ञानप्रयोजनं च परमकारणत्वेनाभिवर्णितं भवति। ततस्तृतीयोऽक्षर-धर्मो भवति, स चाधिष्ठानकारणस्वरूपः। अत एव "जरामरण-मोक्षाय" इत्याद्यक्षरगीताचरमश्लोकेन कर्मव्यवसायाऽधिष्ठान-कारणं शुद्धाक्षरस्वरूपब्रह्मसमाश्रयणं चाभिहितं भवति। ततो राजविद्याधर्मश्च तुरीयः, स चाऽधिकारिशिक्षालक्षणो धर्मो भवति। स च करणस्वरूपं कारणं भवति। अत एव च "भो-क्तारं यज्ञतपसाम्" इति राजविद्यागीताचरमश्लोकेन राजविद्या-धिकारिणां शान्तिकारणं करणस्वरूपं कारणं चोच्यते। ततः परमहं-सधर्मश्च पञ्चमः, स च कर्मव्यवसायाधिकारिस्वरूपबोधकत्वेन कर्तृस्वरूपकारणं भवति। अत एव "एषा ब्राह्मी स्थितिः पार्थ" इत्यादिपरमहंसगीताचरमश्लोकेन कर्तृस्वरूपं च कारणं ब्राह्मी-स्थितिरूपं चाभिहितं भवति। एवमुपपादिताः पञ्च धर्माश्च कारणपरा इति शुद्धार्यसिद्धान्तः। ततः षष्ठः कर्मव्यवसायफल-स्वरूपः स्वातन्त्र्यलक्षणः कैवल्यधर्मश्च सन्यासो भवति। अत एव "तस्मात्त्वमिद्रियाण्यादौ" इति सन्यासगीताचरमश्लोकेन दुष्टेन्द्रियविजृंभणविजयजा च शुद्धिः सन्यासलक्षणा परप्राप्ति-हेतुश्चाऽभिहिता, इति विज्ञायते। ततश्चैवमुपपादितधर्मषट्कोपे-तश्च तृतीयव्यवसायो भवतीति सिद्धान्तः। किं चात्र तुरीया-

श्रमिणां धर्माश्च तद्व्यवसायाङ्गभूताः प्रतिपादिता इति विज्ञायन्ते। एवं द्वितीयपादाधिकारिणां ब्रह्मविभूतिमतां च प्रार्थकानां कर्म-व्यवसायश्च प्रयत्नरूपः, तृतीयेऽस्मिंश्च कर्मपादे प्रतिपादितो भवतीत्यपि च सिद्धान्तः। एवं भगवता नारदेन—

नारदकारिकाः।

अथ योगब्रह्मविद्यातृतीयचरणे पुनः।
तृतीयं तत्त्वकूटं च भवेत्तत्कर्मलक्षणम् ॥ ९८ ॥
तन्मनस्तत्त्वबीजं च साहंकारं सविक्रमम्।
समवायश्च भूतानां सेन्द्रियाणामितीर्यते ॥ ९९ ॥
कर्माधिकरणं तच्च विकृत्यात्म सनातनम्।
व्याख्यातं वासुदेवेन सरहस्यं विविच्य हि ॥ १०० ॥
तृतीये तत्त्वकूटेऽस्मिन्क्षेत्रज्ञस्यात्मनश्च हि।
परभावाभिसिद्ध्यादिधर्मैः षड्भिः समन्वितः ॥ १०१ ॥
वस्तुत्रयनायकश्च कार्यकारणलक्षणः।
तृतीयो व्यवसायश्च भवेदिति च निर्णयः ॥ १०२ ॥
तत्रकारणरूपाश्च पञ्च धर्माः सनातनाः।
षष्ठो धर्मश्च कार्यः स्यात्स फलं स्यादितीर्यते ॥ १०३ ॥
परभावाभिसिद्धिश्च येन वै संप्रजायते।
सोऽयं प्राणायामधर्मः प्रथमश्चेति कीर्त्यते ॥ १०४ ॥

ततः परमात्मधर्मो द्वितीयश्च भवेदिह ।
स दैवकारणरूपो भवेदिति च बुद्ध्यते ॥ १०५ ॥
ततश्चाक्षरधर्मो यो भवेज्जीवात्मलक्षणः ।
सोऽपि चाधिष्ठानरूपस्तृतीयश्च भवेदिह ॥ १०६ ॥
ततश्चैव राजविद्याधर्मः स्याज्ज्ञानलक्षणः ।
सोऽयं स्यात्करणरूपस्तुरीयश्चेति निर्णयः ॥ १०७ ॥
ततश्च पञ्चमो धर्मः कर्तृविज्ञानलक्षणः ।
धर्मः परमहंसानामिति सोऽयं निगद्यते ॥ १०८ ॥
षष्ठः सन्यासधर्मश्च कर्मिणां च परं फलम् ।
भवेदिति च सिद्धान्तो महर्षिभिरिहोच्यते ॥ १०९ ॥
तृतीयो व्यवसायश्च कर्मसन्यासलक्षणः ।
भूतेन्द्रियसमुत्पन्नस्तुरीयाश्रमिभिः पुनः ॥ ११० ॥
संसेव्य इति सिद्धान्तः कथितः पूर्वमेव हि ।
तुरीयः पुरुषार्थश्च मोक्षः संन्यासलक्षणः ॥ १११ ॥
तुरीये चैव वयसि संसेव्यश्च भवेदयम् ।
नियतोऽयं हि सर्वेषां क्षेत्रे क्षेत्रज्ञयोगतः ॥ ११२ ॥
तस्माद्योगब्रह्मविद्या तृतीयाङ्घ्रिः सनातनः ।
षड्भिश्चैव हि गीताभिः प्रोक्तो भगवता पुनः ॥ ११३

इति, तृतीयतत्त्वकूटनियता व्यवसायाश्च धर्मपरा व्याख्याता भवन्ति । एवम्—

**कुमारकारिकाः।**

अथ तृतीयषट्कस्य गीतायाश्चैवमेव हि।
धर्मषट्कस्वरूपत्वं विज्ञेयं स्याद्विचक्षणैः ॥ १४५ ॥
यद्वै मनस्तत्त्वबीजं द्विमुखं पञ्चकारणम्।
तथा ह्येकफलं चैव वस्तुत्रयसमुज्वलम् ॥ १४६ ॥
षड्भिर्धर्मैरुपेतं च तथा भूतैश्च सेन्द्रियैः।
साहंकारं च तच्च स्यात्तृतीयं तत्त्वमण्डलम् ॥ १४७ ॥
तदिन्द्रियकूटचक्रं कार्यकारणलक्षणम्।
प्रवृत्तिपरया चैव निवत्तिपरया तथा ॥ १४८ ॥
दक्षिणया चोत्तरया गत्या हि भ्रमतेऽर्थदम्।
तृतीये तत्त्वचक्रेऽस्मिन्नधिकारस्य लक्षणम् ॥ १४९ ॥
सर्वेषां देहिनां चैव सन्यासस्य च कारणम्।
तृतीयो व्यवसायश्च धर्मैः षड्भिः समन्वितः ॥ १५० ॥
वस्तुत्रयनायकश्च मोक्षार्थपरभावनः।
संभवेदिति विज्ञेयं शुद्धयोगाधिकारिभिः ॥ १५१ ॥
तत्त्वचक्रे तृतीयेऽस्मिन्ये स्युर्धर्माश्च षट्पुनः।
तेषु कारणरूपाः स्युः पञ्च धर्माः परायणाः ॥ १५२
षष्ठो यश्च परो धर्मः कार्यरूपः स चोच्यते।
प्राप्यविज्ञानरूपश्च सोऽयं सन्यासलक्षणः ॥ १५३ ॥
प्रथमः कर्मरूपश्च कारणात्मा भवेत्तथा।
दैवकारणरूपश्च द्वितीयः स्यात्तथा पुनः ॥ १५४ ॥

तृतीयोऽधिष्ठानरूपकारणात्मा भवेदिह ।
तुरीयः करणरूपकारणात्मा तथा भवेत् ॥ १५५ ॥

पञ्चमश्च कर्तृरूपकारणात्मा भवेदिह ।
सोऽयं हि परमहंसधर्मः स्यादिति बुद्ध्यते ॥ १५६ ॥

फलं परमहंसानां सन्यासः शुद्धिलक्षणः ।
षष्ठो धर्मश्चैव भवेदिति शुद्धार्यकीर्तितः ॥ १५७ ॥

आरभ्य गर्भाधानाच्च ये स्युश्चामरणं च हि ।
देहिनां चैव सर्वेषां व्यवसायाः क्रिया पराः ॥ १५८ ॥

तेषु सर्वेषु धर्माश्च षडुक्ताः स्युरितीर्यते ।
दृष्ट्या विदग्धया चैव वेद्यास्ते स्युर्मनीषिभिः ॥१५९॥

प्रोक्तकर्मव्यवसायपराणामधिकारिणाम् ।
परभावाभिसिद्ध्यादिधर्माश्च नियता मताः ॥ १६० ॥

तस्मात्तृतीयषट्कस्य तृतीयव्यवसायिनः ।
धर्मषट्कस्वरूपत्वं गीतायाः स्यादितीर्यते ॥ १६१ ॥

शुद्धैः परमहंसैश्च तुरीयैरधिकारिभिः ।
भवेत्षट्कं तृतीयं च विज्ञेयमिति निर्णयः ॥ १६२ ॥

इति, भगवता कुमारेणाऽपि ज्ञानव्यवसायमूलस्य मानसव्यवसाय-सिद्धस्य च कर्मव्यवसायस्य तदभिवर्णितधर्मषट्कोपेतत्वं च व्याख्यातम् । एवं सनातनधर्मदीपिकायामपि—

"अथ चेत्थं तत्त्वकूटं तृतीयं च क्रियापरम् ।
कार्यकारणभावैश्च धर्मैः षड्भिः समन्वितम् ॥
व्याख्यातं शुद्धधर्मज्ञैः परैश्च मुनिपुङ्गवैः ।
तदिन्द्रियतत्त्वकूटकार्ये चैव क्रियापरे ॥
व्यवसाये हि ये च स्युर्धर्माः कारणलक्षणाः ।
ते चेत्थं संप्रकथ्यन्ते विज्ञेयास्तेऽधिकारिभिः ॥
यः कश्चित्पुरुषश्चापि स्वात्मानमधिकारिणम् ।
व्याचष्टे च स्वपाण्डित्यादिना शारीरकर्म च ॥
सोऽयं स्यादधिकारी च कपटः क्षुद्रलक्षणः ।
आत्महन्ता च पापीयानिति सूरिभिरुच्यते ॥
यो विद्वांश्च यथाकालं यथादेशं यथाविधि ।
यथावस्थं च चरति स्वानुरूपेण कर्मणा ॥
तथा यथाधिकारं च स देवः पुरुषोत्तमः ।
स ब्रह्मा स शिवश्चेति कथ्यते धर्मकोविदैः ॥
अतश्चोक्तं कर्मतन्त्रपराभिः श्रुतिभिः पुनः ।
इत्थमेव सविज्ञानं मुख्यत्वं सर्वकर्मणाम् ॥
"ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥"

इति तस्मात्क्रियापरव्यवसायो विधीयते ।
तत्रोक्तं पूर्वमन्त्रेण व्यवसायस्य कर्मणः ॥
स्वरूपं पञ्चधर्माणां विशुद्धं कारणात्मनाम् ।
तथा चोत्तरमन्त्रेण ब्रह्मविज्ञानपूर्वकम् ॥
शुद्धं च कुर्वतां कर्म फलं चोक्तं हि शाश्वतम्
अतः क्रियापरोऽयं हि व्यवसायेषु पूज्यते ॥
अतश्चैव कर्म सर्वं ह्यविकारस्य लक्षणम् ।
इति योगब्रह्मविद्या व्याख्याति च यथाभवम् ॥
प्रारब्धाच्च हि संसारात्सर्वे चैवाधिकारिणः ।
संपूर्णैः कर्मभिश्चैव विमुक्ताश्च यथाक्रमम् ॥
परं स्थानं प्राप्नुवन्ति धर्मोऽयं हि सनातनः ।
इति प्राचीनहंसाश्च व्याचख्युः परदृष्टयः ॥
कर्मणां हि स्वार्थदोषराहित्यं च यदा भवेत् ।
तदैव कर्मणां चापि पूर्णत्वं हि भवेदतः ॥
अधिकारी च सन्यासी त्यागी चेति हि नामतः।
कथ्यते योगशास्त्रज्ञैः शुद्धार्यैश्च महर्षिभिः ॥
नियमोऽयं हि सर्वत्र लक्ष्यते सत्यदृष्टिभिः ।
ततः क्रियापरे चैव व्यवसाये सनातनाः ॥
पञ्चकारणरूपाः स्युर्धर्माश्चाभ्युदयप्रदाः ।
त्यागसन्यासयोः प्राप्तिः शुद्धस्वातन्त्र्यलक्षणा ॥

फलं क्रियापराणां च भवेदिति च बुद्धयते ।
तत्पञ्चधर्मविज्ञानात्तत्कर्मव्यवसायिनाम् ॥
हृतः स्यात्स्वार्थदोषश्च परसामीप्यनाशकः ।
तत्र प्राणायामधर्मः परभावाभिसिद्धिदः ॥
कर्मलक्षणसंपन्नः प्रथमोऽयं निगद्यते ।
परभावसिद्धयभावे स्वार्थदुष्टस्य कर्म च ॥
नियतं नष्टचेष्टं च स्तब्धं स्यादिति कथ्यते ।
तस्मात्प्राणायामधर्मो मुख्यः स्याद्राजयोगिनाम् ॥
सोऽयं कर्मस्वरूपं च कारणं स्यादितीर्यते ।
तस्यापि बहुधा भेदः कल्प्यते शुद्धयोगिभिः ॥
ततः परमात्मधर्मो द्वितीयश्चात्र कीर्तितः ।
परमात्मभावना च तत्कर्मव्यवसायिनाम् ॥
मुख्या स्याज्जीवभूता च भवेदिति निगद्यते ।
तस्मात्परमात्मधर्मो दैवकारणलक्षणः ॥
भवेत्तेन स्वार्थदोषबीजनाशश्च जायते ।
तद्दोषबीजनाशेन ते च वै कर्मयोगिनः ॥
सर्वज्ञाः सर्वभावेन जानन्ति पुरुषोत्तमम् ।
तथैव परमं धाम प्राप्नुवन्ति स्वयोगतः ॥
ततश्चाक्षरधर्मश्च तृतीयः परिकथ्यते ।
अधिष्ठानस्वरूपश्च स भवेदिति बुध्यते ॥

सोऽयमक्षरधर्मश्च शुद्धाऽशुद्धस्वभावतः ।
द्विविधश्च भवेत्तत्र यो निवृत्तिपरो भवेत् ॥
शुद्धः सोऽयं हि कथितो यः प्रवृत्तिपरो भवेत्।
अशुद्धः सोऽयमित्येव सिद्धान्तः शुद्धसंमतः ॥
स्वार्थदोषस्थाननाशो धर्मेणाऽनेन जायते ।
तस्मात्तृतीयो धर्मोऽयं कर्मिणां नियतो भवेत् ॥
ततो भवेद्राजविद्याधर्मश्च करणात्मकम् ।
कारणं स च विज्ञेयो भवेदिति निगद्यते ॥
सोऽयं महात्मनां शिक्षाधर्म इत्युच्यते बुधैः ।
सद्राजयोगिभिश्चैव तैः कर्मव्यवसायिभिः ॥
सेव्योयमिति सिद्धान्तः पूज्यते शुद्धयोगिभिः ।
शिक्षितानां हि वैदग्ध्यं जायते चाधिकारिणाम् ॥
सर्वेषां कर्मिणां चैव स्वार्थदोषस्य कारणम् ।
अविद्यासत्सङ्गजं च धर्मेणानेन नश्यति ॥
ततश्च परमहंसधर्मः स्यात्पञ्चमोऽत्र हि ।
कर्तृस्वरूपविज्ञानलक्षणः स इतीर्यते ॥
कर्मव्यवसायफलसन्यासाय स्वभावतः ।
कर्तृस्वरूपकारणं धर्मः सोऽयं भवेदिह ॥
अनेन स्वार्थदोषश्च दूरतश्चैव तिष्ठति ।
तस्माच्च पञ्चमोऽयं हि धर्मः स्यान्नियतस्तथा ॥

तस्मात्क्रियापराणां च पञ्च धर्माश्च ते पुनः ।
शुद्धसन्न्यास सिद्धेश्च कारणानि भवन्ति च ॥
तत्कर्मव्यवसायस्य सन्न्यासः स्यात्फलं परम् ।
सन्न्यासी चैव योगी स्यात्स्वरूपाच्च स्वभावतः ॥
तत्प्रवृत्तिव्यवसायपरस्यैवाऽऽत्मनश्च हि ।
प्रथमे ज्ञानपरे च व्यवसाये ह्युपक्रमः ॥
तत्कर्मव्यवसाये च ह्युपसंहार उच्यते ।
एवं निवृत्तिपरस्य तस्य चैवात्मनश्च हि ॥
उपक्रमोपसंहारौ भवेतां हि यथाक्रमम् ।
इदमत्र हि विज्ञेयं रहस्यं धर्मकोविदैः ॥
सत्येवं शुद्धसन्न्यासे पूर्णकर्मत्वलक्षणे ।
सङ्कल्पबीजस्त्यागश्च विशुद्धः संप्रजायते ॥
सति तस्मिन्विशुद्धश्च ह्यधिकारी भवेत्तथा ।
विज्ञानी राजयोगी च योगप्रेप्सुर्भवेदिति ।
ततः सन्न्यासधर्मश्च भवेत्तद्योगकारणम् ।
भवेदिति च सिद्धान्तः कथ्यते कर्मयोगिभिः ॥
सन्न्यासश्च यथा योगकारणं स्यादितीर्यते ।
तथा चैव हि योगश्च भवेत्सन्न्यासकारणम् ॥
कर्मिणां प्राणकोशे च कोशे चान्नमये तथा ।
उपास्यः परमात्मा च कथितः स्यादितीर्यते ॥

अतश्चास्मिन्तृतीये च तत्त्वकूटे च भौतिके।
तृतीयो व्यवसायश्च धर्मैः षड्भिः समन्वितः॥
यथाक्रमं भगवता व्याख्यातोऽस्ति महात्मना।
प्रारब्धव्यवसायानां त्रयाणां च यथाक्रमम्॥
परमे शुद्धसन्यासधर्मे स्वातन्त्र्यलक्षणे।
आत्मकैवल्यमूले च प्रवेशो हि महान्भवेत्॥
इति योगब्रह्मविद्यारहस्यज्ञैः प्रदर्शितम्।
इति चैवं तत्त्वकूटं तृतीयं चाभिवर्णितम्॥"

इति, तृतीयतत्त्वकूटनियतः कर्मव्यवसायो नियतधर्मषट्कश्च समभिवर्णितो भवति। तस्मादेवमुपपादिताचार्यप्रमाणवचनैश्च गायत्रीलक्षणाया योगब्रह्मविद्यास्वरूपायाश्च श्रीभगवद्गीतायास्तृतीय षट्कस्य वस्तुत्रयनायकस्य च प्राणायामधर्मादिधर्मषट्कोपेतत्वं षडध्यायनिबद्धत्वं च भवति समञ्जसम्, इति शुद्धार्यसिद्धान्तः।

ततश्च परमव्यक्ततत्त्वकूटं भवति। तस्य च तदुक्तव्यवसायत्रयबीजस्वरूपत्वं तुरीयपादगतिमत्वं केवलत्वमव्याकृतत्वं च व्याख्यातम्। अक्षरस्वरूपस्य तदव्यक्ततत्त्वकूटस्य तदात्मनः क्षेत्रज्ञस्य च सति च स्वनियतशक्त्या हि योगे, तस्मिन्नेवाऽव्यक्ततत्त्वकूटे च वस्तुत्रयनायको धर्मषट्कोपेतश्च योगव्यवसायो हि संभवतीति विज्ञायते। अतश्चाव्यक्ततत्त्वमण्डलं योगव्यवसायाधिकरणं भवतीति सिद्धान्तः। तत्त्वकूटवाचकानां च महदि-

त्यादिशब्दानामवयवद्वयात्मकत्वम्, तत्र च यथाव्यवसायं पूर्वावयवस्याऽबद्धात्मवस्तुस्वरूपबोधकत्वम्, उत्तरावयवस्य शक्तिस्वरूपबद्धात्मवस्तुस्वरूपबोधकत्वमिति च विज्ञायते। न च द्वितीयावयवस्य शक्तिस्वरूपबोधकत्वमेवोक्तमिति वाच्यम्, शक्तिस्वरूपमित्यनेन व्यवसायपरं सशक्तिकं च ब्रह्मैवाभिधीयत इति व्याख्यानात्। ततश्चोभयमपि वस्तु व्यवसायनायकं भवति। न च पूर्वावयववाच्यात्मस्वरूपस्य व्यवसायनायकत्वकथनमयुक्तं तस्याबद्धत्वाद्बद्धस्यैव व्यवसायनायकत्वाच्चेति वाच्यम्, तस्यापि शुद्धस्वदृष्ट्या शुद्धव्यवसायनायकत्वस्य श्रुतत्वात्तत्त्वानां प्रत्येकमपि प्रवृत्तिनिवृत्तिपरव्यवसायवच्छुद्धव्यवसायस्यापि नियतत्वाच्च। अत एव "सगुणं निर्गुणं शुद्धम्" इति तदात्मवस्तुस्वरूपमधीयते। तथा च तत्तत्तत्त्वकूटसमभिलक्षितोऽयमात्मा च प्रवृत्तिपरया च शक्त्या बद्धः प्रवर्तते व्यवसाये, निवृत्तिपरया च शक्त्या बद्धश्च व्यवसायान्निवर्तते, शुद्धव्यवसायपरया च योगब्रह्मशक्त्या "समोऽहमेकोऽहम्" इति शुद्धव्यवसायपरो भवति, इति विज्ञेयम्। सर्वेषां चैवाधिकारिणां प्रवृत्तिपरव्यवसायेषु शक्तयश्च व्यवसायनायिकाः देव्यादिनामभिः, निवृत्तिपरव्यवसायेषु शक्तयश्च तादृश्यो योगशक्तिरिति नाम्ना, शुद्धव्यवसायनायिका शक्तिश्च योगब्रह्मशक्तिः योगदेवीति च नाम्ना हि, व्यवह्रीयत इति विवेकः। न चैवं पूर्वोत्तरावयववाच्यात्मस्वरूपस्य शक्त्युपहितत्वमविशेषेण वक्तुं

युक्तम्, किं तदुत्तरावयववाच्यात्मस्वरूपस्यैव विशेषतः शक्त्युपहितत्वकथनमिति वाच्यम्, तदुत्तरावयववाच्यात्मस्वरूपस्यैव व्यवहारविषयप्रवृत्तिनिवृत्तिपरसंसारनायकत्वात्तस्यैव हि तत्सङ्कल्पायत्तशक्तिस्वरूपत्वप्रतिपादनावश्यकत्वाच्छुद्धव्यवसायस्याव्यवहार्यत्वाच्च। तथा च यथासंसारव्यवसायं ब्रह्मशक्तिस्वरूपभेदस्य युक्तत्वमिति सिद्धान्तः। वस्तुतस्तु बुभुत्सुबोधार्थमेव तथा व्याख्यानमिति' तत्त्वकूटानामवयवद्वयकल्पनेनार्थं च 'वदतो भगवतष्टङ्काचार्यस्य' सिद्धान्त इति विज्ञायते। अत एव भगवान्नारदश्चापि तत्त्वानां प्रथमभागेन शुद्धात्मस्वरूपस्य, तदुत्तरभागेन सगुणनिर्गुणात्मस्वरूपस्य च बोध इत्याह। न चैवं त्रयाणां ज्ञानादिव्यवसायानां प्रवृत्तिपरत्वस्य च कथनात्कथं वा हि तेषां निवृत्तिपरत्वमिति वाच्यम्, सर्वेषां च तेषां व्यवसायानां तद्व्यवसायनायकात्मवस्तुनः स्वदृष्ट्या च निवृत्तिपरव्यवसायस्य वक्तव्यत्वात्। ततश्च ज्ञानव्यवसायस्य प्रवृत्तिपरत्वे तस्मात्सङ्कल्पकर्मणां प्रभवः, निवर्त्तिपरत्वे तेषामप्यय इति सिद्धान्तः। यद्यपि तदव्यक्ततत्वकूटस्य केवलत्वात्तन्नियतयोगव्यवसायस्यापि तथात्वाच्च कार्यकारणभावधर्मद्वयोपहितत्वं च न संभवति, तथापि तृत्वैकत्वयुक्तसंसारव्यवसायबीजस्याऽव्यक्ततत्त्वकूटस्य नियमेन तद्धर्मद्वयस्य वक्तव्यत्वात्तथा कथनं च युक्तमेव। अत एव "अशुद्धाभ्यां च द्वाभ्यां हि दृष्टिभ्यां प्रवृत्तिपराणां व्यवसायानां च त्रयाणां निवृत्तिपरस्य तदेकव्यव-

सायस्य च बीजं भवत्यव्यक्ततत्त्वमण्डलम्, शुद्धदृष्ट्या हि केवलस्य शुद्धयोगव्यवसायस्य च बीजं भवत्यव्यक्तमण्डलम्, सर्वेषां तेषां व्यवसायानां धर्मषट्कोपेतत्वमपि विभाव्यते" इति टङ्कादयश्चाचार्याः। न च प्रवृत्तिपराणां व्यवसायानामशुद्धत्वम्। निवृत्तिपराणां च तेषां शुद्धत्वं चोक्तमिति वाच्यम्, प्रवृत्तिपरव्यवसयापेक्षया निवृत्तिपरव्यवसायस्य शुद्धत्वमिति दृष्ट्या हि तथा व्याख्यातमिति' विज्ञानिभिर्विज्ञेयत्वात्। अत एव "एवमव्यक्तो भगवान्सकृत्कृत्स्नात्कुरुते संहरते च" इति भारतस्थकुमारसूत्राच्च तदव्यक्ततत्त्वकूटव्यवसायनायकस्यैव ब्रह्मणस्तदुपक्रमोपसंहारपरसंसारव्यवसायनायकत्वं च विज्ञायते। अत्र च 'कुरुते संहरते, इति तस्य क्रियानिर्देशात्तस्यैव ब्रह्मणः क्रियान्तरमपि साम्येन वर्तनरूपं शुद्धं च वर्तत इति विज्ञायते। तत्समं ब्रह्मैव हि तुरीयतत्त्वकूटनियतशुद्धव्यवसायनायकं च "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनम्" इत्यादि श्रुत्यभिवर्णितं भवति, इति विज्ञायते। एवमभिवर्णितमव्यक्तमेव शुद्धं स्यादिति विज्ञायते। तस्मादव्यक्तं च शुद्धमशुद्धं चेति, तत्राशुद्धाव्यक्तगतेरात्मनोऽशुद्धदृष्ट्या हि प्रवृत्तिपरा निवृत्तिपरा व्यवसाया भवन्तीति, शुद्धाव्यक्तगतेरात्मनः परमात्मस्वरूपस्य च शुद्धदृष्ट्या हि तुरीयो योगव्यवसायश्च तृत्वैकत्वरूपो धर्मषट्कोपेतश्च संभवतीति च शुद्धार्यसिद्धान्तः। अत एव हि तदात्मनश्चैकस्मादेव संसारादन्ये संसाराश्च संभवन्ति,

ते च पुनस्तस्मिन्प्रलीयन्ते, एवं वर्तनमात्मनो नित्यमिति चेत्थं हि—

"ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः।
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः॥
विद्या विद्यार्थितत्वेन मयोक्ता ते विशेषतः।
अक्षरं च क्षरं चैव यदुक्तं तन्निबोध मे॥
उभावेतौ क्षरावुक्तावुभावेतौ क्षराक्षरौ।
कारणं तु प्रवक्ष्यामि यथाख्यातो न जानतः॥
अनादिनिधनावेतावुभावेवेश्वरौ मतौ।
तत्त्वसंज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः॥
सर्गप्रळयधर्मत्वादव्यक्तं प्राहुरक्षरम्।
तदेतद्गुणसर्गाय विकुर्वाणं पुनः पुनः॥
गुणानां महदादीनामुत्पद्यन्ते परंपराः।
अधिष्ठानं क्षेत्रमाहुरेतत्तत्पञ्चविंशकम्॥
यदा तु गुणजालं तदव्यक्तात्मनि संक्षिपेत्।
तदा सह गुणैस्तैस्तु पञ्चविंशः प्रलीयते॥
गुणागुणेषु लीयन्ते तदैका प्रकृतिर्भवेत्।
क्षेत्रज्ञोऽपि यदात्वेवं तत्क्षेत्रे संप्रलीयते॥
तदाऽक्षरत्वं प्रकृतिर्गच्छति गुणसंज्ञिता।
निर्गुणत्वं च वै देहगुणेष्वप्रतिवर्तनात्॥

एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात् ।
प्रकृत्या निर्गुणस्त्वेष भवेदित्यनुशुश्रुम ॥
क्षरो भवत्येष यदा तदा गुणवती मिथः ।
प्रकृतिं चाभिजानाति निर्गुणत्वं तथात्मनः ॥
तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।
सोऽयमात्मा विशुद्धात्मा स भवेदमृताक्षरः ॥"

इति, महाभारतवचनादवगम्यते। अतश्चाव्यक्तनामानि च—अव्यक्तम्, प्रकृतिः, मूलम्, प्रधानम्, योनिः, अव्ययम्, नित्यम्, एकम्, अणु, व्यापि, क्रियाहीनम्, अहेतुकम्, तमः, शिवम्, धाम, रजः, सनातनम्, निर्विकारम्, प्रळयः, प्रभवः, अप्ययः, अनुद्रिक्तम्, अनूनम्, अकंपम्, अचलम्, ध्रुवम्, शान्तम्, ब्रह्म, सत्, असत्, त्रिगुणम्, शुद्धम्, सत्त्वम्, उत्तमम्, तत्, अजरम्, अक्षरम्, क्षरम्, प्रथमम्, तुरीयम्, अग्राह्यम्, इत्यादीनि महाभारतादिषु व्यवहृतानि भवन्ति। अत्र केषांचित्केवलाव्यक्ततत्त्ववाचकत्वम्, केषांचिदव्यक्ततत्वनियतव्यवसायस्वरूपबोधकत्वम्, केषांचित्तद्व्यवसायनायकात्मवस्तुस्वरूपबोधकत्वमिति च विज्ञेयम्। एवं योगव्यवसायपरेऽस्मिन्नाव्यक्ततत्त्वकूटे धर्माश्च षट् संभवन्ति। तत्र च प्रथमे पञ्च धर्माश्च पञ्चकारणरूपा इति, षष्टो धर्मश्च कार्यरूपः, इति च विज्ञेयम्। तत्र च कारणपरेषु च पञ्चसु धर्मेषु प्रथमो भवत्यात्मधर्मः।

स च दैवविज्ञानकारणस्वरूपो भवति। सोऽयमात्मगीतयाऽभिधीयते। अत्र च योगिभिः समुपास्यमानं शुद्धं चात्मस्वरूपं ब्रह्म योगव्यवसायपरमकारणं समभिवर्णितं भवति। अत एव हि प्रथममात्मगीतायाम् "विस्तरेणात्मनो योगम्" इत्यर्जुनप्रश्नश्च योगात्मस्वरूपजिज्ञासापरश्च स्यादिति विज्ञायते। अत एव च "आत्मगीतायां चास्यां प्रतिपादितेषु भगवद्वचनेषु शुद्धाऽशुद्धव्यवसायनायकं च तुरीयमात्मस्वरूपं योगिभिः समुपास्यमानं च विशेषतो ह्यभिवर्णितं भवति" इति भगवान्टङ्काचार्यश्चाह। अत एव च "तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः" इत्यात्मगीताचरमश्लोकेन तदात्मस्वरूपं च योगिजनसेव्यं समभिष्टुतं भवति, यस्य विज्ञानाच्च मुक्ता योगिनश्च परं प्राप्ता न पुनरावृत्तिं प्राप्नुवन्ति। अथ द्वितीयः प्रकृतिधर्मो भवति। प्रकृतिश्चात्राभिवर्णितमव्यक्तमेव। प्रकृतिधर्मश्च प्रकृतिगीतयाभिवर्णितो भवति। सोऽयमत्राधिष्ठानकारणस्वरूपो भवति। त्रिविधः प्रकृतिधर्मश्चात्र प्रतिपाद्यते। अत एव "इति क्षेत्रं तथाज्ञानं ज्ञेयं चोक्तं समासतः" इति प्रकृतिगीताचरमश्लोकेन 'क्षेत्रम्' इति तदव्यक्तमेव योगव्यवसायाधिकरणत्वेन प्रतिपादितमिति विज्ञेयम्। ततः कर्मधर्मश्च भवति। स च क्रियारूपकारणलक्षणो भवति। सोऽयं कर्मगीतया व्याख्यातो भवति। अत एव "निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः" इति कर्मगीताचरमश्लोकेन विवृ-

त्तिपरं शुद्धं च कर्मस्वरूपमभिवर्णितं चास्तीति विज्ञायते। ततो भक्तिधर्मश्च भवति। स च करणात्मकारणस्वरूपो भवति। स च भक्तिगीतया व्याख्यातो भवति। भक्तिरेव योगिनां परप्राप्तये भवत्यसाधारणकारणं करणमिति विज्ञायते। अत एव "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इति भक्तिगीताचरमश्लोकेन भक्तेः करणत्वं तयैव परप्राप्तिरूपं ब्रह्मसामीप्यं च भवतीति भगवता ह्युपदिष्टमिति च विज्ञायते। भक्तिश्चात्र निवृत्तिपरा शुद्धा च भवतीति हि बुद्ध्यते। ततो ज्ञानधर्मश्च भवति। स च कर्तृस्वरूपलक्षणं कारणं भवति। सोऽयं ज्ञानगीताभिवर्णितो भवति। अत एव हि "मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः" इति ज्ञानगीताचरमश्लोकेन निवृत्तिपराणां शुद्धानां च योगिनां ज्ञाननिष्ठा च कर्तृस्वरूपविज्ञानलक्षणा भगवता प्रतिपादितेति च विज्ञायते। ततो योगधर्मश्च षष्ठो भवति। स च योगगीतया हि प्रोच्यते। स च योगव्यवसायफलं ब्रह्मसामीप्यं च भवति। अत एव हि "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति योगगीताचरमश्लोकेन सर्वधर्मपरित्यागपूर्वकं ब्रह्मसामीप्यं च शुद्धयोगिसमधिगम्यं भगवता समुद्दिष्टमिति विज्ञायते। अत्र च 'सर्वधर्मान्परित्यज्य' इत्यनेन निवृत्तिपरयोगव्यवसायफलस्वरूपश्च सर्वधर्मपरित्यागः, 'एकं शरणं व्रज, इत्यनेन शुद्धं स्वातन्त्र्यलक्षणं परपदशब्दवाच्यं क्षेत्रं च योगव्यवसायफलं हि संप्रदर्शितमिति च विज्ञायते। एवम्—

"अहमेव न मेऽन्योऽस्ति न प्रबुद्धवशानुगः।
अव्यक्तस्थो गुणानेष नित्यमेवाभिमन्यते ॥"

इति, महाभारते चाव्यक्तगुणाश्चाभिवर्णिता भवन्ति । अत एव हि—

"ये चाप्यन्ये तन्मनसस्तेऽप्येतत्फलभागिनः ।
विदित्वैवं न शोचन्ति योगोपेतार्थदर्शिनः ॥
स्वातन्त्र्यं प्रतिलप्स्यन्ते केवलत्वं च भास्वरम् ।
अज्ञानबन्धनान्मुक्तास्तीर्णाः संसारबन्धनात् ॥"

इति, महाभारते च योगव्यवसायफलं च संप्रदर्शितं भवति । एवमत्र—

नारदकारिकाः

अथ योगब्रह्मविद्यातुरीयचरणे तथा ।
तुरीयं तत्त्वकूटं च भवेत्तद्योगलक्षणम् ॥ ११४ ॥
तद्भवेत्सर्वमुलं च निर्विकारं निरञ्जनम् ।
प्रपञ्चोपशमं शान्तं प्रधानं शिवमच्युतम् ॥ ११५ ॥
अनादिमध्यनिधनं तुरीयं ब्रह्मलक्षणम् ।
शुद्धं चेति च सर्वाभिः श्रुतिभिश्चैव वर्ण्यते ॥ ११६ ॥
व्यवसायश्च शुद्धो यो यो विवृत्तिपरस्तथा ।
तस्याधिकरणं तत्स्यादिति ज्ञेयं मनीषिभिः ॥ ११७ ॥

तस्य शुद्धात्मनश्चैव शुद्धे योगे परे सति ।
तद्योगव्यवसायश्च धर्मैः षड्भिः समन्वितः ॥ ११८ ॥
तुरीयेऽव्यक्तकूटे च भवेदित्येव निर्णयः ।
धर्मास्ते चेत्थमेवात्र कार्यकारणलक्षणाः ॥ ११९ ॥
वस्तुत्रयनायकाश्च व्याख्याताः स्युर्महात्मना ।
तत्र शुद्धात्मधर्मश्च प्रथमः सोऽयमेव हि ॥ १२० ॥
परदैवकारणात्मा भवेदिति निगद्यते ।
ततश्चात्मा विशुद्धश्च योगिभिः समुपास्यते ॥ १२१ ॥
ततः प्रकृतिधर्मः स्याद्द्वितीयोऽव्यक्तलक्षणः ।
अधिष्ठानकारणात्मा स भवेदिति बुद्ध्यते ॥ १२२ ॥
ततश्च कर्मधर्मः स्यात्ततीयः शुद्धलक्षणः ।
कर्मरूपकारणात्मा सोऽयं स्याद्योगलक्षणः ॥ १२३ ॥
ततश्च भक्तिधर्मः स्यात्तुरीयः शुद्धलक्षणः ।
सोऽयं स्यात्करणरूपकारणात्मेति कथ्यते ॥ १२४ ॥
ततश्च ज्ञानधर्मः स्यात्पञ्चमः कर्तृलक्षणः ।
इत्येते पञ्च धर्माश्च भवेयुः कारणत्मकाः ॥ १२५ ॥
अथ प्रोक्तो योगधर्मः षष्ठः स्याद्योगलक्षणः ।
तुरीयव्यवसायस्य सोऽयं चैव फलं भवेत् ॥ १२६ ॥
योगिभिर्व्यवसायोऽयं तुरीयो योगलक्षणः ।
संसेव्यश्च भवेदेवं पुरुषार्थश्च पञ्चमः ॥ १२७ ॥

व्यवसायस्यास्य फलं भवेदिति निगद्यते ।
पञ्चमः पुरुषार्थः स्याद्ब्रह्मसमीप्यलक्षणः ॥ १२८ ॥
सर्वेषां सर्वदा चैव वासुदेवप्रसादतः ।
शुद्धार्यानुग्रहेणैव योगः शुद्धश्च देहिनाम् ॥ १२९ ॥
भवेदिति च सिद्धान्तः शुद्धाचार्यनिरूपितः ।
तस्माद्योगब्रह्मविद्या तुरीयाङ्घ्रिः सनातनः ॥ १३० ॥
षड्भिश्चैव हि गीताभिः प्रोक्तो योगीश्वरेण हि ।
नमो भगवते तस्मै कृष्णाय परमात्मने ॥ १३१ ॥

इति, भगवता नारदेन तुरीयतत्त्वकूटनियता व्यवसायाश्च धर्मपरा व्याख्याताश्च भवन्ति । एवमेव भगवता कुमारेणाऽपि—

## कुमार कारिकाः

ततस्तुरीयषट्कस्य गीतायाश्चैवमेव हि ।
धर्मषट्कस्वरूपत्वं विज्ञेयं योगिभिर्भवेत् ॥ १६३ ॥
यच्चात्मलक्षणं शुद्धं सर्वमूलं सनातनम् ।
तदव्यक्ततत्त्वकूटं तुरीयमिति कथ्यते ॥ १६४ ॥
तच्चाऽव्यक्ततत्त्वचक्रं त्रिगुणं पञ्चकारणम् ।
तथा चैकफलयोगं वस्तुत्रयसमुज्वलम् ॥ १६५ ॥
प्रवृत्तिपरया चैव निवृत्तिमरया तथा ।
शुद्धया चैव गत्या च भ्रमते ब्रह्मलक्षणम् ॥ १६६ ॥

सति तेनात्मना योगे तस्य तस्मात्त्रयश्च हि ।
व्यवसायाश्च जायन्ते षड्भिर्धर्मैः समन्विताः ॥ १६७ ॥
यदा हि सगुणा दृष्टिरात्मनोऽव्यक्तमण्डले ।
अशुद्धा च तदा तस्माज्जायतेऽव्यक्तमण्डलात् ॥ १६८ ॥
प्रवृत्त्या व्यवसायश्च यदा चैव तदात्मनः ।
अशुद्धा निर्गुणा दृष्टिस्तुरीयेऽव्यक्तमण्डले ॥ १६९ ॥
तदा हि व्यवसायश्च निवृत्त्या ज्ञायते तथा ।
यदा चैवाऽऽत्मनो दृष्टिः शुद्धा ह्यव्यक्तमण्डले ॥१७०॥
तदा च जायते शुद्धो व्यवसायः स्वभावतः ।
एवमुक्ता व्यवसाया योगमूला भवन्ति हि ॥ १७१ ॥
तस्माद्योगव्यवसायस्तुरीयेऽव्यक्तमण्डले ।
धर्मैः षड्भिरुपेतश्च जायते चेति निर्णयः ॥ १७२ ॥
प्रथमाः पञ्च धर्माश्च तत्र कारणलक्षणाः ।
षष्ठो धर्मः कार्यरूपो भवेदिति निगद्यते ॥ १७३ ॥
तत्राऽऽत्मधर्मः प्रथमो दैवकारणलक्षणः ।
द्वितीयः प्रकृतिधर्मः स चाऽधिष्ठानकारणम् ॥ १७४ ॥
तृतीयः कर्मधर्मः स्यात्क्रियारूपं च कारणम् ।
तुरीयो भक्तिधर्मः स्यात्कारणं करणात्मकम् ॥ १७५ ॥
पञ्चमो ज्ञानधर्मः स्यात्कारणं कर्तृलक्षणम् ।
षष्ठश्च योगधर्मः स्यात्फलं चेति ततश्च हि ॥ १७६ ॥

तुरीये तत्त्वकूटेऽस्मिन्योगिवेद्योऽर्थ उच्यते ।
तस्मात्तुरीयषट्कस्य तुरीयव्यवसायिनः ॥ १७७ ॥
धर्मषट्कस्वरूपत्वं गीतायाः स्यादितीर्यते ।
शुद्धैरिदं हि विज्ञेयं तद्ब्रह्मशरणार्थिभिः ॥ १७८ ॥
एवं हि व्यवसायैश्च त्रिभिः सांख्यसमीरितैः ।
भक्तिं च ब्रह्मवित्प्राप्यां ज्ञानकर्माभिवर्धिताम् ॥ १७९ ॥
अधिष्ठिता ये धर्मज्ञास्तेभ्यः शुद्धेभ्य एव हि ।
भगवान्योगिनां नाथो ब्राह्मं स्थानं प्रयच्छतु ॥ १८० ॥

इति, तदव्यक्ततत्त्वकूटनियतयोगव्यवसायस्य धर्मषट्कस्वरूपत्वं तथा तस्य सरहस्यं शुद्धयोगिभिः संसेव्यत्वं च व्याख्यातम् । एवं सनातनधर्मदीपिकायाम्—

"ततश्चेत्थं तत्त्वकूटं तुरीयं योगलक्षणम् ।
कार्यकारणभावैश्च धर्मैः षड्भिः समन्वितम् ॥
व्याख्यातं शुद्धधर्मज्ञैः परैश्च मुनिपुङ्गवैः ।
यत्तुरीयं तत्त्वकूटं तदव्यक्तमितीर्यते ॥
तस्मिंश्चैव प्रवृत्तेश्च निवृत्तेश्च स्वभावतः ।
सगुणो निर्गुणः शुद्ध इति योगपरः परः ॥
त्रिविधो व्यवसायश्च जायते चेति योगिराट् ।
सप्रमाणं तुरीयेऽस्मिन्षट्के व्याख्याति धर्मतः ॥

अतः सामान्यनाम्ना हि धर्माः षट् चात्र कीर्तिताः ।
प्रत्येकं तेषु धर्मेषु त्रिविधोऽर्थश्च बुद्ध्यते ॥
तस्माद्योगव्यवसायधर्मे च प्रथमे पुनः ।
सगुणो निर्गुणः शुद्धश्चायमात्मा सनातनः ॥
योगिभिः समुपास्यश्च तद्विज्ञानं विशेषतः ।
उपासकानां निष्ठा च शुद्धयोगैकलक्षणा ॥
इति सर्वं भगवता व्याख्यातं चेति बुद्ध्यते ।
एवं प्रकृतिधर्मेऽपि द्वितीये योगिभिः पुनः ॥
अधिष्ठानकारणे च त्रैविध्यमिति निर्णयः ।
एवं तृतीयधर्मे च तुरीये पञ्चमेऽपि च ॥
त्रैविध्यं कथ्यते चापि योगब्रह्मपरायणैः ।
षष्ठे धर्मेऽपि चैवं हि योगधर्मोपलक्षिते ॥
त्रैविध्यं चापि योगस्य वासुदेवेन कीर्तितम् ।
इदमेवात्र गुह्यं हि व्याख्यातं स्यान्महात्मना ॥
परस्थानसंस्थितिश्च विशुद्धा योगलक्षणा ।
पार्थायाऽत्र भगवता ह्युपदिष्टेति बुद्ध्यते ॥
यया हि वीतशोकश्च योगी ब्रह्मपरायणः ।
स्वतन्त्रः सर्वसिद्धिश्च समः शुद्धश्च जायते ॥
सर्वमावश्यकं चैव सर्वं ब्रह्मस्वभावजम् ।
सर्वं तत्खल्विदं ब्रह्म चेति ज्ञानं यया भवेत् ॥

सा परस्थानसंस्थितिरिति सूरिभिरुच्यते ।
परस्थानं समापन्नो भुङ्क्ते च परमं सुखम् ॥
तुरीये योगषट्के च धर्माः कारणलक्षणाः ।
पञ्चाऽथ षष्ठो धर्मोऽयं कार्यरूपश्च चोदितः ॥
तस्मात्तुरीयषट्कं च योगलक्षणलक्षितम् ।
विज्ञेयं योगिभिश्चेति तदिदं चाभिवर्णितम् ॥
इत्थं हि योगशब्दार्थो बुद्ध्यते योगदर्शनात् ।
ज्ञानं तथा च सङ्कल्पः कर्म प्राप्तिश्च धर्मतः ॥
सर्वमेतद्योगशब्द वाच्यं स्यादिति बुद्ध्यते ।
ज्ञानभक्तिकर्मगर्भः प्राप्तिगर्भस्तथापरः ॥
इति योगस्य सामान्यं द्वैविध्यं श्रुतिचोदितम् ।
अत एव हि योगस्य त्रैविध्यमपि कथ्यते ॥
यश्च ज्ञानकर्मभक्तिगर्भः प्रोक्तोऽयमेव सः ।
त्रिविधश्चेति सिद्धान्तः पूर्वाचार्यैः समर्थितः ॥
ततश्चोद्धवगीतायां ह्युद्धवाय महात्मने ।
इत्थं योगरहस्यार्थं व्याचख्यौ भगवान्पुरा ॥
योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित् ॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कमिनाम् ॥

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिषक्तो भक्तियोगोऽस्य सिद्धिदः ॥
तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा यावच्छ्रद्धा न जायते ॥
स्वधर्मस्थो यजन्यज्ञैरनाशीः काम उद्धव ।
न याति स्वर्गनरकौ यदन्यन्न समाचरेत् ॥
अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥
स्वर्गिणोऽप्येनमिच्छन्ति लोकं निरयिणस्तथा ।
साधनं ज्ञानभक्तिभ्यां चोभयं तदसाधकम् ॥
न नरः स्वर्गतिं काङ्क्षेन्नारकीं न विचक्षणः ।
नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥
एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥
छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ।
खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलंपटः ॥
अहोरात्रैः छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ।
मुक्तसंगः परं बुद्ध्वा निरीह उपशाम्यति ॥
यदारंभेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनाऽऽत्मनो योगी धारयेदचलं मनः ॥

धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥
मनोगतिं न विसृजेज्जितश्वासो जितेन्द्रियः ।
सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥
एष वै परमो योगो मनसः संग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन्नदान्तस्यार्वतो यथा ॥
सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥
यमादिभिर्योगपथैरान्वीक्षक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥
यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ।
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥
स्वेस्वेऽधिकारे या निष्ठा सगुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥
कर्मणां जात्यशुद्धानां चानेन नियमः कृतः ।
गुणदोषविधानेन संगानां त्याजनेच्छया ॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥

ततो भजेत मां प्रीत्या श्रद्धालुर्दृढनिश्चयः ।
जुषमाणस्तु तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥
प्रोक्तेन भक्तियोगेन भजते माऽसकृन्मुनिः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टेऽखिलात्मनि ॥
इति तस्माज्ज्ञानभक्तिकर्मगर्भश्च यो भवेत् ।
योगः सोऽयं हि सांख्यानां धर्मः स्यादिति निर्णयः ॥
परो यः प्राप्तिगर्भश्च धर्मः सोऽयं हि योगिनाम् ।
भवेदिति च सिद्धान्तो योगिनाथेन कीर्तितः ॥
ज्ञानभक्तिकर्मगर्भो योगो यश्चाऽपरो भवेत् ।
योगिनामारुरुक्षूणां सोऽयं स्यादिति निर्णयः ॥
योगो यः प्राप्तिगर्भश्च तुरीयो ब्रह्मलक्षणः ।
आरूढानां योगिनां स धर्मः स्यादिति कथ्यते ॥
तस्मात्सोऽयं प्राप्तिगर्भो योगः सन्याससहेतुकः ।
षट्केऽस्मिंश्च तुरीये हि व्याख्यातोऽस्ति महात्मना ॥"

इति, तुरीयषट्कधर्माश्च षडभिवर्णिताः । अत्र च कर्मभक्तिज्ञानयोगानां त्रयाणां योगिभिश्चारुरुक्षुभिः सेव्यत्वम्, तेषां च सांख्यत्वम्, प्राप्तिगर्भस्य तुरीयव्यवसायरूपस्य च योगस्य योगिसेव्यत्वेन मुख्यत्वं च सयुक्तिकं व्याख्यातं भवति । तस्मा-

देवमुपपादितप्रमाणवचनैश्च योगब्रह्मविद्यास्वरूपायाः श्रीभगवद्गीतायास्तुरीयषट्कस्य धर्मषट्कसमन्वितत्वं षडध्याययुक्तत्वं च भवति, इति शुद्धार्यसिद्धान्तः। तस्मादेव च तत्त्वानां चतुर्धा विभागेन, यथाविभागं च धर्मषट्कोपेतव्यवसायस्य व्याख्यानेन च, तदस्याः श्रीभगवद्गीताया गायत्रीलक्षणायाश्च नरनारायणधर्मगीतादिचतुर्विंशतिगीतात्मिकत्वं च भवति समञ्जसम्।

### ४. अथ श्रीभगवद्गीतायाः अध्यायश्लोकसंख्यास्वरूपसमर्थनम्।

अत एव सेयं श्रीभगवद्गीता हि 'अध्यायानां च षड्विंशत्या' संविभक्ता भवतीत्यवगम्यते। इत्थं पुनः सप्रयोजनमध्यायशब्दार्थोऽभिधीयते—अधीयते 'यथाधिकारं हि मुख्यविषयाङ्गभूतोऽर्थश्च, अनेन, इत्यध्यायः। स च विभागस्वरूपोऽध्ययनलक्षणश्च भवति, इति। अतस्तत्तन्नाम्नैव पृथङ्निर्दिष्टस्य तस्य तस्य च शास्त्रस्य विद्यायाः कलायाश्च सत्यप्येकविषकत्वेनैकत्वे, तन्मुख्यविषयाङ्गभूतानां यथाधिकारं च सद्भिर्विद्वद्भिश्च विशेषतो वेद्यानां चार्थानां भेदस्य दृष्टत्वेन यथातद्विशेषार्थविज्ञानं तच्छास्त्रादिविभागश्चाऽध्यायादिनामभिर्विज्ञायते। अतश्च मुख्यविषयवासुदेवस्वरूपव्याख्यानपरत्वेन महाभारतस्यैकत्वेऽपि, तदवान्तरार्थदृष्ट्या तस्य पर्वभेदः, यथापर्व तदध्यायभेदश्च दृश्यते। किंचायं विभागश्चाऽध्यायलक्षणः 'तत्तच्छास्त्रप्रणेतृभिरधिकारिभिरेव कृतः, इति तु न नियमः, परं तु तत्तच्छास्त्राद्यध्ययनपरैर

ध्यापकैश्च महर्षिभिरधिकारिभिरपि संप्रकल्पितो भवति' इति च बुद्ध्यते। अतश्चैवाऽध्यायादिनामभिरेकस्यैव शास्त्रस्य विभागकल्पनं च तत्तदार्याधीनमिति विज्ञायते। तत एव महाभारतस्य अध्याया विभागरूपाश्च न तन्महाभारतप्रणेतृभिः कृताः, परं तु वैशंपायनप्रभृतिभिरेव महाभारतार्थविशारदैश्च कल्पिताः, इति पूर्वाचार्यव्याख्यानाद्विज्ञायन्ते। तस्माच्च शास्त्रादीनां प्रत्येकमपि स्वभावतश्चैकत्वेऽपि स्वरूपतो भवति नानात्वम्, तदधिकृत्यैव तस्यैकस्याऽपि तदध्यायादिनामभिर्विभागश्च भवेदिति सिद्धान्तः। तस्मादियं श्रीभगवद्गीता कृष्णद्वैपायनकृतलक्ष्यलक्षणात्मकमहाभारतार्थरहस्यज्ञैर्महर्षिभिश्च षड्विंशदध्यायात्मिकेति कथ्यते। अत एव भगवता गोभिलेनापि भारतार्थकारिकायामित्थम्——

"इत्थमुक्ता च तद्गीताध्यायसंख्या महर्षिभिः।
यथाकालं यथादेशं सत्यधर्मपरायणैः॥
भार्गवं भारतं ये च विजानन्ति महर्षयः।
तैः पुनर्भगवद्गीताध्यायाश्च षडितीरिताः॥
ये च वै भारतं सूत्ररूपं जानन्ति योगिनः।
तैः पुनश्च गीताध्यायाश्चत्वार इति कीर्तिताः॥
ये च वै वस्तुतत्त्वज्ञा धर्म्यैकर्मप्रवर्तकाः।
तैश्चापि गीताध्यायाश्च त्रयः स्युरिति चोदिताः॥

ये च वै प्रणवं शास्त्रं भारतार्थं वदन्ति च।
तैश्चापि गीताध्यायाश्च चत्वार इति कीर्तिताः ॥
कृष्णद्वैपायनकृतं भारतं शुद्धसंमतम्।
ये विजानन्ति धर्मज्ञास्ते च सर्वे महर्षयः ॥
तामिमां भगवद्गीतां योगब्रह्मपरायणीम्।
अध्यायैश्चैव षड्विंशत्संख्याकैर्विभजन्ति च ॥
चतुर्विंशतिसाहस्रीं धर्म्यां भारतसंहिताम्।
भार्गवीं तपसा दृष्ट्वा चतुर्विंशतिविक्रमाम् ॥
तस्याश्चतुर्मुखांश्चैव लोकयात्रास्वरूपिणः।
चतुर्विंशत्तत्त्वधर्मान्विज्ञाय हि यथामति ॥
धर्मलक्ष्यैरुपाख्यानैर्देवांशानां महात्मनाम्।
अलङ्कृतं शुद्धधर्मपरैर्ज्ञेयं विशेषतः ॥
लक्ष्यलक्षणभावं च भारताख्यमनुत्तमम्।
सनातनधर्मगुप्तं सर्वधर्मतरङ्गितम् ॥
इतिहासवरं लोके प्रादर्शयदकल्मषम्।
कृष्णद्वैपायनव्यास इति पूर्वं निरूपितम् ॥
तस्माद्योगब्रह्मविद्यास्वरूपा योगलक्षणा।
श्रीमती भगवद्गीता गायत्री शुद्धलक्षणा ॥
अध्यायैश्चैव षड्विंशत्संख्याकैर्भूषिता भवेत्।
इति शुद्धैर्मुनिवरैर्निर्णयश्चात्र चोदितः ॥

भारतार्थरहस्यज्ञैरयं ग्राह्यो भवेदिति ।
नारदाद्यैर्मुनिवरैः प्रोक्तं स्यात्सिद्धमण्डले ॥"

इति, श्रीभगवद्गीताध्यायसंख्यानिर्णयश्च समयान्तरसिद्धतत्संख्यास्वरूपप्रतिपादनपूर्वकं कृतः, इति च विज्ञायते। अत्रेदमवधेयम्—इदानीं परिदृश्यमानमहाविभवं लोकयात्राविधानस्वरूपं शुद्धार्थसुपरिष्कृतं कार्ष्णं च महाभारतं हि–द्विविधमवगम्यते 'लक्षणपरं लक्ष्यपरम्' चेति। तत्र लक्षणपरं मूलमहाभारतं च भार्गवप्रणीतं हि भवति। तस्मिंश्च पुनः 'तत्त्वकूटानि, तन्नियतव्यवसायाः, त्रिविधं रहस्यम्–'संसारात्मस्वरूपम्, केवलात्मस्वरूपम्, शुद्धात्मस्वरूपम्, इति, अकारोकारमकाराः, इति, सगुणम्, निर्गुणम्, शुद्धम्, इति च त्रिविधं रहस्यम्, तथा तत्तत्तत्त्वकूटनियतव्यवसायनायकं ब्रह्मस्वरूपं च वस्तु, विद्याः, धर्मार्थकाममोक्षप्राप्तिस्वरूपाश्च पञ्च पुरुषार्थाः, तन्निरूपणपरा विविधाश्च शास्त्रार्थाः, इति लोकयात्राविधानस्वरूपं सर्वमपि प्रतिपादितम्। तदपरं च लक्ष्यपरं महाभारतम्। तत्र च लक्षणपरमहाभारतार्थलक्ष्यभूतार्थाः पुण्यपुरुषोपाख्यानोपहिताश्च प्रतिपादिताः। अतश्चेदं हि 'कार्ष्णं महाभारतम्, सनातनधर्मलक्ष्यलक्षणार्थस्वरूपव्याख्यानपरं भवतीति सिद्धान्तः। तस्य परामर्शाच्चाऽधिकारिवेद्या धर्माश्चतुर्विंशत्प्रकारा भवन्ति, इति विज्ञायते। किं च भगवता कृष्णद्वैपायनेन स्वयोगबलसंप्रकल्पिते च लक्ष्यलक्षणधर्मानुशासनस्वरूपे लोकयात्राविधानलक्षणे चाऽस्मिन्महाभारते, स्वोक्तार्थ-

प्रमाणतया 'श्रीभगवद्गीता' च ग्रथिता भवति, इति पूर्वाचार्यैरभिधीयते। तथा च 'इयं श्रीभगवद्गीता, तदभिवर्णितमहाभारतार्थजीवभूतार्थव्याख्यानपरा भवति, इति विज्ञायते। किं च महाभारतं च भार्गवं विजानद्भिश्च जंबूकादिद्विजैस्तदिदं लक्ष्यलक्षणात्मकत्वेन सुपरिष्कृतं च कार्ष्णं महाभारतं विध्वस्तं समभवदिति, तथा तस्मिंश्च पुनः सुपरिष्कृतेऽप्यन्यमहर्षिभिर्यथावस्थितश्लोकसंख्याऽध्यायसंख्याक्रमं चेति सर्वं व्यत्यस्तं समभूदिति, चान्यत्र विस्तरः। ततस्तदभिवर्णितलक्ष्यलक्षणात्मककार्ष्णमहाभारतार्थं च विमृशद्भिर्विद्याधिकारिभिश्च संवेद्या धर्माश्च चतुर्विंशत्प्रकारा भवन्तीत्यवगम्यते। एवं च तदभिवर्णितमहाभारतार्थं हि तत्त्वतो विमृशतामाचार्याणाम् 'इयं श्रीभगवद्गीता, अध्यायानां च षड्विंशत्या संविभक्ता भवति, इति निष्कृष्टश्च सिद्धान्तः। अत एव "तदिदं हि महाभारतं लक्षणपरं च भार्गवेण काण्डैः षड्भिश्च संविभक्तं धर्ममूलपुरुषार्थव्याख्यानपरं च प्रथमं समभवत्। तत्र षष्ठे च काण्डे सेयं योगब्रह्मविद्या 'श्रीभगवद्गीता' अध्यायैश्च षड्भिः संविभक्ता परिदृश्यते। लक्ष्यलक्षणात्मके धर्ममूलपुरुषार्थव्याख्यानपरे च कार्ष्णे महाभारते हि भीष्मपर्वणि सेयं 'श्रीभगवद्गीता' षड्विंशत्या चाध्यायानां हि संविभक्ता भवेत्, इति विज्ञायते। सेयं गायत्रीसंज्ञिका भवति। गायत्री च तत्त्वविद्या भवति। त इमे चैकधातुमूले भवतः। त्याज्योपादेयार्थं हि तत्त्वदर्शनेन विजानन्तं यतश्चेयं

त्राति 'सर्वं तत्खल्विदं ब्रह्म, सर्वं ब्रह्मस्वभावजम्, सर्वमावश्यकम्, इत्यर्थोपदेशेन रक्षति, ततश्चेयं गायत्रीत्युच्यते। महाविष्णोः परमात्मनश्च संसारस्य यावन्तः प्रकाराः, तेषां व्याख्यात्त्रीयं भवति गायत्री विद्या, इयमपि तथैवेति गायत्रीति चोच्यते। अतश्चेत्थम्।

"तत्त्वविद्या च गायत्री ब्रह्मेति च हि श्रूयते।
संसारात्मस्वरूपं तत्त्रिविधं चेति कथ्यते॥
शुद्धं चेति च तच्चाऽपि योगब्रह्मेति गीयते।
गायत्र्या हि चतुष्पद्या ब्रह्म संस्तूयते गिरा॥
अतश्च वाग्वै गायत्रीत्युच्यते श्रुतिभिः पुनः।
अतस्तया जगत्सर्वं यत्किं च जगत्यां जगत्॥
व्याप्तं चेति पुरा प्रोक्तं छन्दसामृषभेण हि।
एवं विशुद्धे तत्त्वे च ब्रह्मणि यः स्वभावतः॥
संसारस्तस्य तत्त्वं हि गायत्र्या ह्यभिधीयते।
सैषा चतुष्पदी विद्या गायत्री षड्विधा भवेत्॥
षड्विधाश्च षट्प्रकारास्तेषु पञ्च स्वरूपतः।
प्रोक्ताः कारणरूपाश्चेत्यथ षष्ठं फलं भवेत्॥
कार्यरूपं चेति सम्यक्तदर्थो ह्यभिधीयते।
यथा च तुळसी विष्णोर्ह्यर्चनार्था भवेत्तथा॥
ब्रह्मार्चनापरा चैषा गायत्री सा चतुष्पदी।
भवेदिति च सिद्धान्तो वेदविद्भिर्निगद्यते॥

शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः ।
तद्गायत्रीस्वरूपं हि भवेदिति च संस्थितिः ॥
महाविष्णुश्च भगवान्सर्वभावसमुज्वलः ।
इदं सर्वं जगच्छक्त्या ह्यवष्टभ्य स्वयोगतः ॥
एकांशेन च स्वे तत्त्वे त्रिविधश्चैव राजते ।
इति गुह्यतमं चार्थं सैषा व्याख्याति तत्त्वतः ॥
अतो विद्याऽपि गायत्री त्रिविधाः प्राणिनस्तथा ।
लोका नानाविधाश्चैव सेश्वराः सविभूतिकाः ॥
सच्चिदानन्दरूपं च ब्रह्म शुद्धं सनातनम् ।
सर्वमेतच्च गायत्रीशब्दवाच्यमितीर्यते ॥
देवस्तुतिस्वरूपा च सा भवेदिति कथ्यते ।
मन्त्रात्मिका च तत्सिद्धेः शक्तिं चैव हि वैष्णवीम् ॥
उपासका भजन्तीति कथ्यते योगिपुङ्गवैः ।
वैष्णवी योगशक्तिश्च सा भवेद्धि चतुर्मुखी "

इत्युपनिषत्कारिकायां भगवता गोभिलेनोच्यते । अतश्च सनातनधर्मस्य लक्षणं लक्ष्यं चेत्युभयमपि कृष्णद्वैपायनदृष्टान्महाभारतादेवाऽवगम्यते, इति विज्ञायते । तत्रैवमभिवर्णिता च सा श्रीभगवद्गीतैव हि प्रमाणभूता च भवति । एवमनेकेषामपि चतुर्विंशत्प्रकारकं च सामान्यधर्ममवलंब्य 'गायत्री, इति संज्ञा भवति । अतश्च गीतायाश्चतुर्विंशत्प्रकारकधर्मव्याख्यानपरत्वं च

सिद्धं भवति, इत्यवगम्यते। विशेषतस्तु गायत्र्याः 'षट्प्रकारकत्वम्, द्वादशप्रकारकत्वम्, अष्टादशप्रकारकत्वम्, चेति विज्ञायते। अत एव 'एकपदी गायत्री, द्विपदी च गायत्री, त्रिपदी च गायत्री, चतुष्पदी च गायत्री, इति श्रौतोऽपि व्यवहारश्च दृश्यते। तत्र च चतुष्पद्येव गायत्री स्वभावतः स्वरूपतश्च संपूर्णा भवति। किं च "प्रणवाद्याः सर्वविद्याः प्रणवान्ताश्च सन्ति हि" इति श्रुतेर्विद्यानां च सर्वासां प्रणवादित्वप्रणवान्तत्वस्य च दर्शनेन श्रीभगवद्गीतायाश्चापि योगब्रह्मविद्यास्वरूपाया ह्याद्यन्ते च तादृशप्रणवार्थेनाध्यायेन भवितव्यमिति विज्ञायते। ततश्चतुर्विंशद्विभागवत्याश्च श्रीभगवद्गीतायाः प्रथमचरमाध्यायौचोपक्रमोपसंहारपरप्रणवार्थव्याख्यानपरौ भवतः, इति विज्ञाते। तस्मादियं श्रीभगवद्गीता हि तदध्यायानां च षड्विंशत्या विभक्तेति शुद्धसिद्धान्तः" इत्याह भगवान्टङ्काचार्यः। अतश्च सनातनधर्मदीपिकायामेवम्—

"पुरा भगवता प्रोक्ता या गीता योगलक्षणा।
सा हि षड्विंशदध्यायैर्गुम्भिता कृष्णयोगिना॥
आद्यन्ताभ्यां च व्याख्यातो ह्यध्यायाभ्यां महामनुः।
प्रणवश्च यथातत्त्वं तदर्थश्चेत्थमुच्यते॥
आद्यो यः प्रणवः प्रोक्तः सर्वविद्यासु तस्य हि।
दैवी ब्राह्मी महाशक्तिः प्रथमं तत्त्वमुच्यते॥

विद्या सांसारिकी सा च द्वितीयं तत्त्वमुच्यते ।
भास्वता ज्ञानदीपेन नाशयन्भूतभावनः ॥
अज्ञानजं तमः कृत्स्नं चात्मभावस्थितः परः ।
सोऽयं पुमान्तृतीयं स्यात्तत्त्वमित्यवधार्यताम् ॥
स्वीकारश्च तथा चर्चा प्राप्तिश्चेति यथाक्रमम् ।
त्रयाणमुक्ततत्त्वानामर्थो विद्यावतां भवेत् ॥
समष्टिव्यष्टिरूपं च सर्वमूलं सनातनम् ।
कारणं विश्वरूपं च सर्वातीतं गुहाशयम् ॥
अन्त्यप्रणववाच्यं स्यादात्मानात्मस्वरूपवत् ।
चत्वारि चास्य तत्त्वानि तत्स्वरूपमिदं शृणु ॥
ज्ञानमिच्छा क्रिया चैव समाहारस्तथाऽपरः ।
प्रयोजनं तथैतेषामित्थं ज्ञेयं मनीषिभिः ॥
ज्ञानं ध्यानं तथा कर्म शुद्धं विज्ञानमेव च ।
इत्यध्याये च षड्विंशे स्तुतं ब्रह्म पराऽवरम् ॥
एवं विद्यासु सर्वासु शास्त्रेषु च कलासु च ।
अदावन्ते च विज्ञेयः प्रणवार्थः परीक्षया ॥
विद्यार्थिभिश्च सर्वैर्हि धर्मोऽयं हि सनातनः ।
अयं भारतसूत्रे च योगव्यासेन कीर्तितः ॥
यथा चैव हि गायत्री ह्यादावन्ते च धर्मतः ।
प्रणवेनाभियुक्ता च सर्वेषां सिद्धिदा भवेत् ॥

तथा संसारतत्त्वस्य व्याख्यात्री धर्मलक्षणा।
तत्त्वविद्या च गायत्री भवेदिति च निर्णयः॥"

इति, भगवता नारदेन श्रीभगवद्गीतायाः षड्विंशदध्यायात्मिकत्वं च प्रतिपादितम्। तस्मात्तदस्याः श्रीभगवद्गीतायाः षड्विंशदध्यायात्मिकत्वं च सिद्धमिति शुद्धार्यसिद्धान्तः। ततश्च "सेयं भवति गायत्री विद्या, यया हि तत्त्वदृष्ट्या संसारव्यवसायानुगतधर्माणां चतुर्विंशत्प्रकारकत्वमाख्यातम्। ततश्च "ऊर्ध्वमूलोऽधः शाखः संसारः" इति श्रुतिः। शाखाश्चात्र त्रिविधाः—ज्ञानपरा, भक्तियारा, कर्मपरा, इति। ऊर्ध्वं च योगो भवति। तस्मादियं चतुष्पती विद्या पूर्णैव सेयमुच्यते। यथापादं च षड्धर्माः। अतः षड्विधा स्यादियम्, इत्युच्यते। प्रणवाद्या प्रणवान्ता च भवेदियमित्यवगम्यते। अतो योगब्रह्मविद्या श्रीभगवद्गीता च गायत्री भवति चतुष्पदी" इति भगवान्शङ्करः। अनेन च श्रीभगवद्गीतायाश्चतुर्धा विभागः, चतुर्णां विभागानां च प्रत्येकं धर्माः षट् च संभवन्ति, इति विज्ञायते। तस्मादपि श्रीभगवद्गीतायास्तदुक्ताध्यायसंख्या च शास्त्रीया इति, सिद्धान्तः।

इत्थं पुनश्च श्रीभगवद्गीतायाः श्लोकसंख्यानियमश्च दृश्यते—भारतयुद्धारंभसमये, या च गीता भगवता पार्थायोपदिष्टा, सा हि "सर्वधर्मान्परित्यज्य" इत्येकश्लोकात्मिकैवेति, ये च पुनरन्ये परिदृश्यमानाः श्लोकाश्च तस्याः, ते सर्वेऽपि यथाकालं भार्गवाद्याचार्यैस्तदभिवर्णितश्लोकव्याख्यनपरत्वेन प्रतिपादिता इति,

प्रतिपादिताश्च ते सर्वेऽपि भगवदभिमतैरधिकारिभिश्चाभ्युपगता इति, ततः श्रीभगवद्गीता चैकश्लोकात्मिकाऽपि यथादर्शनं हि भिन्नभिन्नश्लोकसंख्येति च विज्ञायते, इति। ततश्च भार्गवमहाभारतार्थविज्ञानिनां महर्षीणां च समये श्रीभगवद्गीतायाश्चतुश्चत्वारिंशदधिकशतश्लोकात्मिकत्वम्, सूत्राचार्यमते च तदस्याः षण्णवतिश्लोकात्मिकत्वम्, प्रणवार्थविज्ञानिनां दर्शने चास्यास्तथैवेति, ब्रह्मस्वरूपविज्ञानिनां सिद्धान्ते तु तस्या द्विसप्ततिश्लोकात्मिकत्वम्, समष्टिप्रणवार्थवादिनां तस्याश्चाष्टश्लोकात्मिकत्वम्, इति गीताश्लोकसंख्यानियमश्च प्राचीनदर्शनेषु च संप्रदृश्यते। कृष्णद्वैपायनो व्यासश्च—'योगी सञ्जयश्च समरभूमौ नारायणेन पार्थायोपदिष्टां बुधैश्च खेचरैरधिकारिभिश्च सुपरिष्कृतां शुद्धाकाशफलकसंमुद्रितां वाङ्मयीं च श्रीभगवद्गीतां हि स्वयोगबलेन साक्षात्कृत्य, तां च पुनर्धृतराष्ट्राय राज्ञे चतुर्विंशद्विभागैः षट्सप्तत्युरपञ्चशतश्लोकैश्च व्याचख्यौ' इति विज्ञाय, पुनस्तां च पञ्चचत्वारिंशदधिकसप्तशतश्लोकैः षड्विंशदध्यायैश्च ग्रथ्नातिस्म। तादृशीमेव तां जनमेजयाय राज्ञे वैशंपायनो भगवान्प्रोवाच, इति कृष्णद्वैपायनभारतार्थविज्ञानिनां महर्षीणां सिद्धान्तः। अत एव—

"षट्छतानि सविंशानि श्लोकानां प्राह केशवः
अर्जुनः सप्तपञ्चाशत्सप्तषष्टिं तु सञ्जयः॥
धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते।'

इति, कृष्णद्वैपायन महाभारतभीष्मपर्वान्तर्गतभगवद्गीतापर्वचरमाध्यायवचनं वैशंपायनवदनारविन्दगलितं च साधु सङ्गच्छते। वैशंपायनश्च श्रीभगवद्गीतार्थं च सम्यग्विज्ञायैव ह्येवमाहेति विज्ञायते। अत्रेदमवधेयम्—"धर्मक्षेत्रे" इति प्रथमं श्लोकमेव धृतराष्ट्र उवाचेति बुद्ध्यते। श्लोकस्यास्य सरहस्यमर्थविचारेण हि राज्ञः समग्रश्च श्रीभगवद्गीतार्थः जिज्ञास्यत्वेन पृष्ट इति समुपलभ्यते। ततश्च राजा धृतराष्ट्रः तदेकेनैव श्लोकेन समग्रयोगब्रह्मविद्यावधेयार्थं च तं सञ्जयं पप्रच्छ, इति विज्ञायते। एवं सञ्जयवाक्यानामर्जुनवाक्यानां च तथात्वं ह्यवगम्यते। तथा च धृतराष्ट्रादीनां त्रयाणामेषां च श्लोकानां नियतसंख्यया व्याख्यातानां च षट्छतेषु सविंशेषु च भगवतः श्लोकेषु समन्वयश्च विज्ञेय इति सिद्धान्तः, इति। इदं सर्वमपि यथाप्रकरणमग्रे वक्ष्यते। तस्माल्लक्षणलक्ष्यात्मकमहाभारतशास्त्रप्रणेत्रा प्रमाणतया स्वीकृता चैषा श्रीभगवद्गीतापञ्चचत्वारिंशदधिकसप्रशतश्लोकात्मिकेति शुद्धार्यसिद्धान्तः। ते च पुनर्महर्षयः "शिष्यस्तेऽहम्" इति शरणागताय पार्थाय स्वांशभूताय भगवान्योगीश्वरः श्रीकृष्णः "अशोच्यानन्वशोचस्त्वम्, कुतस्त्वा कश्मलमिदम्, क्लैब्यं मा स्म गमः पार्थ, सर्वगुह्यतमं भूयः, ईश्वरः सर्वभूतानाम्, तमेव शरणं गच्छ, सर्वधर्मान्परित्यज्य" इति सप्तभिः श्लोकैश्च वक्तव्यधर्मानाह, इति च वदन्ति, ये तु पुनर्वासुदेवतरुच्छायां च समधिष्ठिता भवन्ति। इत्थं हि तेषामाशयः—अर्जुनाय हि

भगवान् वक्तव्यार्थं च श्लोकैश्च सप्तभिः प्रोवाच। एवमुपदेशेन पार्थो विदितवेद्यार्थोऽभवदिति वक्तुं च शक्यते। ततस्तदुभौ लोकाधिकारिणौ भवतः। मन्दाधिकारिषु न च सोऽयमर्थश्च सत्यविवेकाय शक्नोति। अतश्च सञ्जयः स्वचार्याऽनुग्रहेण चण्ड-भानुमण्डलावकीर्णं अर्थतः शब्दश्च सुसंबद्धं च गीताचार्याशयं हि सम्यगुपलभ्य स्वयमेव धृतराष्ट्राय यथाभवं तमाह, इति। ततश्च ब्रह्मणस्त्रित्वैकत्वसंसारस्वरूपं चैवंविधया च श्रीभगवद्गीतया व्याख्यातं भवति, इति सम्यग्विज्ञायते। तस्माच्च शुद्धार्यास्तामिमामेव श्रीभगवद्गीतां हि संमानयन्ति। एवम्—

नारनकारिकाः

सेयं हि भगवद्गीता व्याख्याता शुद्धसंमता।
भूतवेदमुनिप्रोक्तैः श्लोकैर्युक्तेति निर्णयः॥ १२२ ॥

सञ्जयो भगवांश्चैव भवेतां परमौ गुरू।
आभ्यां यथाधिकारं हि धर्मश्चैव सनातनः॥ १३३ ॥

तद्योगब्रह्मविद्याभिसंसिद्धः परमः शुचिः।
शिक्षितश्च यथाधर्मं भवेदिति च निर्णयः॥ १३४ ॥

परं तु संग्रहेणैव तस्मै पार्थाय धीमते।
श्लोकैश्च सप्तभिश्चैव तत्त्वमेवं हि योगिराट्॥ १३५ ॥

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥ १३६ ॥

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ १३७ ॥
क्लैब्यं मास्मगमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ १३८ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढ इति ततो वक्ष्यामि ते हितम् ॥ १३१
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ १४० ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥" १४२
इति हि व्याजहारेति पूर्वाचार्यैरिहोच्यते ।
अथासौ सञ्जयश्चापि भगवान्विस्तरेण हि ॥ १४३ ॥
धर्मं तं चैव योगेन विज्ञाय च यथाविधि ।
राज्ञेऽस्मै धृतराष्ट्राय प्रोवाचेति हि बुद्ध्यते ॥ १४४ ॥
ततस्तदुक्तसंख्यैश्च श्लोकैर्गीता महीयसी ।
ब्रह्मसामीप्यविज्ञानजननी लोकपावनी ॥ १४७ ॥
भवतीति च सिद्धान्तः पूर्वाचार्यनिरूपितः ।
सेयं हि भगवद्गीता सर्वेभ्यः शान्तिमृच्छतु ॥ १४२ ॥

इति, भगवता नारदेन श्रीभगवद्गीतायाः श्लोकसंख्या च सरहस्यं चाभिवर्णिता भवतीति विज्ञायते। एवं भगवता कुमारेण—

**कुमारकारिकाः**

एवं हि वर्णिता चैव गीता या शुद्धलक्षणा।
सा चाध्यायैश्च षड्विंशत्संख्याकैर्गुम्भिता भवेत् ॥ १८१ ॥

सपञ्चचत्वारिंशद्भिः श्लोकैः सप्तशतैः पुनः।
युक्ता स्याद्भगवद्गीता चेति शुद्धैर्निगद्यते ॥ १८२ ॥

षट्छतेषु सविशेषु श्रीकृष्णवचनेषु च।
श्लोकाः सप्तैव मुख्याः स्युरन्ये सर्वे च धर्मतः ॥ १८३ ॥

मुख्यार्थव्याख्यानपरा भवन्तीति च बुध्यते।
तस्मादेवं हि गीतायाः श्लोकसंख्या निरूपिता ॥ १८४ ॥

तां योगब्रह्मविद्यां च गीतां जानन्ति ये भुवि।
ते द्वंद्वमोहनिर्वृत्ताः सामीप्यं ब्रह्मणो विदुः ॥ १८५ ॥

इति, श्रीभगवद्गीताश्लोकसंख्या च व्याख्याता भवति, इति विज्ञायते। तस्मादभिवर्णिताचार्यप्रमाणवचनैश्च श्रीभगवद्गीतायाः पञ्चचत्वारिंशदधिकसप्तशतश्लोकात्मिकत्वं च भवति समञ्जसम्, इति शुद्धार्यसिद्धान्तः।

**५. श्रीभगवद्गीताया अनुबन्धिचतुष्टयनिरूपणम्।**

तदित्थं हि श्रीभगवद्गीतायाश्चाऽनुबन्धिचतुष्टयं विज्ञायते—विषयः प्रयोजनं संबन्धोऽधिकारी च, इति तदनुबन्धिचतुष्टय-

व्याख्यानं च सामान्यतः सर्वदर्शनसिद्धं भवेदिति सिद्धान्तः। श्रीभगवद्गीतायां चास्यां हि ब्रह्मस्वरूपं च पुरुषादिपञ्चलक्षणलक्षितं प्रतिपाद्यत्वेन विषयभूतं भवति। 'सर्वं ब्रह्मस्वभावजम्, सर्वमावश्यकम्, सर्वं तत्खल्विदं ब्रह्म' इति विज्ञानं च प्रयोजनं भवति। संबन्धश्च प्रतिपाद्यप्रतिपादकभावरूपः। अधिकारी च श्रीभगवद्गीतार्थजिज्ञासुर्भवति। यद्यपि महाभारतस्याऽनुबन्धिद्वयस्य प्रतिपादितत्वाद्गीताया अपि तथात्वं युक्तम्, तथापि बुभुत्सुबोधार्थं हि तस्य चतुष्टयत्वप्रतिपादनं च भवतीति विज्ञेयम्। तदेवमुपपादितमनुबन्धिचतुष्टयं च योगब्रह्मविद्याधिकारिभिश्च प्रथमं विज्ञेयमिति सिद्धान्तः।

### ६. अथ श्रीभगवद्गीतासंग्रहार्थनिरूपणम्।

#### तत्र प्रथमाऽध्यायसंग्रहार्थः.

अत एव हि विज्ञेयो भवति शुद्धविद्याऽधिकारिभिश्च प्रथमं समग्रायाश्च श्रीभगवद्गीतायाः संग्रहार्थः। तत्र प्रथमाध्यायसंग्रहश्चेत्थमवगम्यते—प्रथमाध्याये हि प्रथमश्लोकश्च ["धर्मक्षेत्रे कुरुक्षेत्रे" इत्यादिरूपः] "प्रशस्ततमानां हि तेषां तेषां च शास्त्राणां प्रथमेन च श्लोकेन तत्तच्छास्त्रसमग्रार्थसंग्रहश्च शब्दतोऽर्थतश्च मनाक्सूचितो भवितुमर्हति" इति पूर्वाचार्यवचनात्समग्रगीतार्थसंग्राहकः स्यादित्यवगम्यते। एतच्छास्त्रजिज्ञासा हि तेषामेव संभवति, ये तु पुनर्विज्ञातान्यशास्त्रार्थाश्च भवन्ति। ततः शास्त्राधिकारिणश्च विज्ञातसर्वशास्त्रार्थाः, अविज्ञातप्रकृतशास्त्रार्थाश्च

भवन्ति। तस्मादेव हि विज्ञातसर्वशास्त्रार्थस्य अविज्ञातप्रकृत शास्त्रार्थस्य च राज्ञोऽस्य धृतराष्ट्रस्य प्रश्नरूपेणाऽनेन प्रथम-श्लोकेन योगब्रह्मविद्याजिज्ञासा च समभिव्यज्यते, इति विज्ञायते। ततश्च यावदध्यायान्तं तद्देवाऽसुरस्वभावतत्स्वभावानुरूपकार्यफल-स्वरूपनिरूपणपूर्वकं योगब्रह्मविद्याधिकारिलक्षणो धर्मो योगब्रह्म-विद्याचार्यभगवदुपदेशहेतुश्च समभिवर्णितः। तत्र हि क्रमशः समारब्धे च भारते युद्धे केवलं प्राकृतधर्मप्रयुक्तं च तदासुरं कार्यम् "दृष्ट्वा तु पाण्डवानीकम्" इत्यारभ्य नवभिश्च श्लोकैः संप्रति-पाद्य, ततो भावान्तरं च दैवाख्यम् "शुचिर्भूत्वा महाबाहो" इति श्रीकृष्णवचनादारभ्य "तान्समीक्ष्य च कौन्तेयः" इत्यन्तैश्च श्लोकैः—यथाधर्मं हि ब्रह्म शक्तिसमुपबृंहितं भवति, सद्व्य-वसायपरैर्दैवभावैरधिकारिभिश्च ब्रह्म शक्तिस्वरूपं च यथासंसार-व्यवसायं हि समुपास्यं भवति, तद्ब्रह्मोपासनयैव हि सर्वे चाधि-कारिणः स्वसंसारनियतान्सर्वांश्च व्यवसायान्परीक्षापूर्वकं परिस-माप्यैव हि परं व्रजन्तीति च, साङ्गं सरहस्यं च व्याख्याय, ततश्च यथाशक्ति संप्रवृद्धे च तस्मिन्देवासुरस्वभावे, तत्स्वभावानु-रूपव्यवसाये च "दृष्ट्वेमं स्वजनं कृष्ण" इति स्वलोकप्रति-निधिस्वरूपानुरूपस्वार्थाग्रहदोषनिवर्तकयोगब्रह्मविद्यास्वरूपसंपूर्ण-गीतावतारमूलाच्च हि तदर्जुनप्रश्नादारभ्य यावतत्प्रश्नसमाप्ति विद्या-धिकारिभिर्विज्ञेयं च सर्वधर्ममूलसनातनधर्मसंरक्षणाधिकारिमहा-पुरुषकार्यशुद्धयोगब्रह्मविद्योपदेशहेतुं स्वार्थदोषनिवर्तयिषुप्रणिपात-

पराधिकारिलक्षणं पार्थनिष्ठं सच्छिष्यस्वभावनियतं च धर्मं, प्रथमं हि योगब्रह्मविद्यार्थजिज्ञासवे तस्मै च राज्ञे धृतराष्ट्राय व्याचख्यौ भगवान्सञ्जयः, इति प्रथमाध्यायसंग्रहार्थः। अत्रेदमवधेयम्—यथा वा ह्येकस्मिंश्च ब्रह्माण्डे वसन्तो देवाऽऽसुरा भावाश्च तदात्मीय-प्राकृतस्वभावनियताः, तदनुयायिनः पुरुषाश्च ब्रह्मस्वभावसिद्धाः, स्वस्वरूपानुरूपं व्यवसायं च ह्यावश्यकमनावश्यकं वितन्वानाः, समाप्तपूर्णव्यवसायाः, शान्ताश्च संसारान्तरमुत्कृष्टतरं च व्रजन्ति, तथा प्रत्येकमस्माकं शरीरेषु नियतास्ते स्वभावाः स्वानुरूपं व्यव-सायं च यथायुगमाचरन्तः शान्ताश्च परं व्रजन्तीति, तत्तदैतिहा-सिकं तत्त्वमवगम्यते। ततश्च महर्षिभिरितिहासपुराणादिषु तां-स्तानधिकारिणश्चाधिकृत्य कृताः सर्वाश्चापि कथास्तदभिवर्णित-स्वभावपरा भवन्तीति, विज्ञायते। तस्मादत्र दृष्टान्ततया हि पाण्डवानां धार्तराष्ट्राणां तदनुयायिनां च पुरावृत्तमित्थमवधेयं भवति—

“भवितव्यमवश्यं तत्सुरकार्यमनिन्दिते।
अवतेरुस्ततः सर्वे देवा भागैर्महीतले॥
गन्धर्वाप्सरसश्चैव पिशाचा गुह्यराक्षसाः।
तथा पुण्यजनाश्चैव सिद्धा देवर्षयोऽपि च॥
देवाश्च दानवाश्चैव तथा देवर्षयोऽमलाः।
त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे॥

गंधर्वराजो यो धीमान्धृतराष्ट्र इति श्रुतः।
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ॥
पाण्डुं मरुद्गणाद्विद्धि विशिष्टतममच्युतम्।
धर्मस्यांशोऽभवत्क्षत्ता राजा चैव युधिष्ठिरः ॥
कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम्।
दुःशासनादीन्विद्धित्वं राक्षसान्शुभदर्शने ॥
मरुद्गुणाद्भीमसेनं बलवन्तमरिन्दमम्।
विद्धि त्वं तु नरमृपिमिमं पार्थं धनञ्जयम् ॥
नारायणं हृषीकेशं चाश्विनौ यमजौ तथा।
द्विधा कृत्वात्मनो देहमादित्यं तपतां वरम् ॥
लोकांश्च तापयानं वै कर्णं विद्धि पृथासुतम्।
यः स वैरार्थमुद्भूतः सङ्घर्षजननस्तथा ॥
तं कर्णं विद्धि कल्याणि भास्करं शुभदर्शने।
यश्च पाण्डवदायादो हतः षड्भिर्महारथैः ॥
स सोम इह सौभद्रो योगादेवाऽभवद्विधा।
द्रौपद्या सह संभूतं दृष्टद्युम्नं च पावकात् ॥
अग्नेर्भागं शुभं विद्धि राक्षसं तु शिखण्डिनम्।
द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम् ॥
गाङ्गेयो वसुवीर्येण देवो मानुषतां गतः।
यो ब्रह्मचारी धीरश्च सत्यसन्धो दृढव्रतः ॥

एवमेते महाप्राज्ञे देवा मानुष्यमेत्य हि।
ततः पुनर्गताः स्वर्गं कृते कर्मणि शोभने॥"

इति। अत्र च 'देवा मानुष्यमेत्यहि' इत्यनेन तदासुराणामपि ग्रहणम्। तथा च तद्देवाऽसुराणां च भावानां देहिनां च प्रत्येकं प्रकृतिमण्डले ह्यावेशश्च यथाकालं भवतीत्युक्तमिति विज्ञायते। ततश्च तद्धार्तराष्ट्राणां पाण्डवानां तदनुयायिनां च तत्स्वभावार्थकत्वं, तादृशार्थविज्ञानेनैवाधिकारिणां तत्त्वार्थाभिज्ञत्वं च विज्ञायते। तदुपपादितभावलक्षणं हि—'तदात्मसत्यशरीरानुगतधर्मप्रवणा भवन्ति देवा भावाः, तदात्मनश्चाऽसत्यनानारूपशरीरानुगतधर्मप्रवणा भवन्त्यासुरा भावाः' इति विज्ञायते। तौ च—सदसत्सङ्कल्पसंभूतौ, मानसव्यवसायपरौ, प्रथमपादाधिकारिवेद्यौ, स्वरूपगीताभिवर्णितौ भवतः। तत एव "तेऽसुराः सन्नह्य सहसैवाचरन्ब्रह्मचर्येण तपसैव देवाः" इति श्रुतिः। देवासुरधर्माश्च क्रमेण तपःप्रमादजा भवन्तीति विज्ञायते। यज्ञश्चात्र स्वेष्टप्राप्तिसाधनयुद्धरूपः स्यादित्यवगम्यते। ततश्चैतस्यास्य भगवतः कालपुरुषस्य तृतीयां तुरीयां च गतिमविज्ञाय लोकसंरक्षणाधिकारमधिष्ठितानां प्राकृतानामासुराणां च भावानां संहरणाय, देवभावाश्च भगवदाश्रयाः समुत्पद्यन्ते। तदेवमात्मनः प्रकृतिमण्डले संसरतां च तेषां भावानां परस्परं भवति कदाचिच्च महद्युद्धम्। तस्मिंश्च तदासुरभावानां पराजयः, तथा दैवानां च

भावानां स्वाराज्यम्, एवं कदाचिच्च तेषां पुनरैक्यं च सर्वलोकाभिवृद्धिमूलं हि सञ्जायते, इति बहुभिश्च तत्तद्रहस्यार्थव्याख्यानपरैरितिहासैश्च परिबुध्यते। ततश्चैवं ते भावास्तदनुरूपव्यवसायाश्च प्रतिब्रह्माण्डं प्रतिलोकं प्रतिशरीरं च संभवन्तीति समञ्जसोऽयं भवति शुद्धार्यसिद्धान्तः। किं चैवं प्रतिपादितानां प्राकृतानामप्राकृतानां च भावानां सति महति कलहे तत्तत्कालधर्मसहजे च, तदा सर्वधर्मपरित्यागपूर्वकमात्मधर्मं च सनातनमधिकारिणः शास्तुश्च भगवतो लोकेश्वरस्य परमपुरुषस्याऽपि भवति सुमहान्प्रवेशः, तदा च देवभावानां सनातनशुद्धधर्मविज्ञानाय तदवतीर्णभगवत्समाश्रयणम्, आसुराणां च तेषां तद्भगवद्धर्मसमाश्रयणाभावश्च भवतीति। अतएवेत्थम् "यदा वा हि परस्परं च धर्माऽधर्मयोस्तद्देवासुरस्वभावसिद्धयोर्लोके भवति समुपरोधः, तदा तादृशस्यैव भगवतः कालानुरूपशास्त्रसंसिद्धधर्मोपदेशार्थं समवतीर्णस्य परमात्मप्रतिनिधेश्च भवति महांश्चोपदेशः, तथा धर्मकामानामलूक्षाणां चाचार्याणामुपदेशः सुमहान्भवति, तस्यास्य भगवतस्तच्छुद्धसङ्कल्पनिर्वाहकमहाचार्याणां च वयं दासा भवेम, यथा वाहि तस्य भगवतस्तदाचार्याणां च सोऽयमुपदेशश्च प्राणिषु समीचीनं प्रसरति, तथा वयमाचरेम" इति भगवद्दङ्काचार्योपदेशश्च विज्ञायते। यदन्यच्चात्र वक्तव्यं तच्च श्रीभगवद्गीताप्रथमश्लोकव्याख्यानावसरे प्रतिपादितं भविष्यति।

**तथा चैवमध्यायेऽस्मिंश्च प्रथमे—सदसच्छिष्यलक्षणम्, तद्विभूतयः,**

सर्वेषामेषां कर्म चेत्यादि साङ्गम्, एवं व्यष्टिप्रणवार्थश्च तदीशे-शितव्यभावप्रधानः, तद्भगवत्परमोपदेशावतारस्वरूपं च सर्वानु-सन्धेयत्वेनात्र प्रतिपादितमस्तीति विज्ञेयम्।

### अथ द्वितीयाध्यायसंग्रहार्थः

अथाऽस्मिंश्चाध्याये द्वितीये भगवान्शुद्धसङ्कल्पाधिकारी च नारायणः श्रीकृष्णाख्यः, स्वार्थावेशेन ह्यनीशया च "सीदन्ति मम गात्राणी" इति परिशोचते पार्थाय–प्रथमं सुखदुःखहेतु-बन्धलक्षणं क्लैब्यं निवर्तयिषुः लोकानुग्रहार्थमस्मिन्भुवने हि स्वस्य चतुर्विधस्वभावेन ब्रह्मांशत्वेन लोकनायकत्वेन च संस्थि-तत्वम्, सर्वाप्ततमत्वेन सच्छास्त्रप्रवर्तकत्वम्, गुह्यत्वेन सर्वाऽवि-भाव्यत्वम्, सर्वसन्निहितत्वेन सर्वैश्वर्यप्रदत्वम्, लोकेश्वरत्वेन जग-ज्जन्मादिहेतुत्वम्, सर्वाधिकारित्वेन व्यापकत्वम्, तथा सर्वेषां शुद्धधर्मसमाश्रयणेन वीतशोकत्वं च व्याजहार, इति द्वितीया-ध्यायसंग्रहार्थः।

### अथ तृतीयाध्यायसंग्रहार्थः।

इत्थं पुनस्तृतीयाध्यायार्थसङ्गतिर्विज्ञायते—तदुक्तपूर्वा-ध्यायार्थविज्ञाताऽयमर्जुनः ज्ञानमूलं विज्ञाय, धीरः पण्डितः सन्नपि, स्वाधिकारदढीकरणप्रतमसाधनतदीश्वरांशावतारस्वरूपजि-ज्ञासुर्बभूव, इति। अथाऽध्यायेऽस्मिंश्च तृतीये धर्मसंरक्षणार्थं सम-वतीर्णो भगवान्वासुदेवः, "मुखं च परिशुष्यति" इति स्वस्य सर्वमूलसनातनवस्तुस्वरूपविज्ञानाभावमावेदयते च पार्थाय, तत्त-

दधिकारिणां तत्सनातनवस्तुस्वरूपविज्ञानं हि तदवताररहस्यार्थविज्ञानाद्भवति, इत्यावेदयितुमेवाऽवतारपुरुषाणां स्वरूपं साङ्गं च व्याजहार, इति तृतीयाध्यायसंग्रहार्थः ।

**अथ तुरीयाध्यायसंग्रहार्थः ।**

एवमेव हि तुरियाध्यायार्थसङ्गतिर्भवति—तृतीयाध्यायार्थं च तदवताररहस्यं यथावद्विज्ञायाऽर्जुनः, तदवतारपुरुषाधिकारस्वरूपजिज्ञासुः संबभूवेति। अथाऽध्यायेऽस्मिंश्च तुरीये भगवाल्लोकेश्वरो महाधिकारी च "वेपथुश्च शरीरे मे" इति स्वाऽवैदग्ध्यमावेदयतेऽर्जुनाय तद्वैदग्ध्यसंपादनप्रकारं साङ्गं चाऽधिकारस्वरूपनिरूपणेनाऽऽवेदयामास, इति तुरियाध्यायसंग्रहार्थः ।

**अथ पञ्चमाध्यायसंग्रहार्थः ।**

एवमेव च पञ्चमाध्यायार्थसङ्गतिर्विज्ञायते—एवमुक्ताधिकारगीतार्थश्रवणेन वैदग्ध्यमाप्तुकामः किल पार्थः शिक्षामपेक्षते, इति। अध्यायेऽस्मिंश्च पञ्चमे सर्वधर्मशास्ता च शिक्षकधुरीणो भगवान्पार्थसारथिः श्रीकृष्णः "रोमहर्षश्च जायते" इति स्वाऽवैदग्ध्यमूलं च कर्तव्याऽकर्तव्याऽविज्ञानं सविनयमावेदयते धनञ्जयाय, तत्कर्तव्याऽकर्तव्यविज्ञानं शिक्षागीतया हि समुपदिदेश, इति पञ्चमाध्यायसंग्रहार्थः ।

**अथ षष्ठाध्यायसंग्रहार्थः ।**

इत्थं हि षष्ठाध्यायार्थसङ्गतिर्भवति—ततश्चैवं शिक्षितोऽप्यर्जुनश्च सर्वकारणवस्तुस्वरूपजिज्ञासुरभवत्, इति। अथाध्याये

च षष्ठे भगवान्विज्ञानैवश्वर्यसंपन्नश्च "गाण्डीवं स्त्रंसते हस्तात्" इति कारणवस्तुस्वरूपाऽनभिज्ञत्वं च विज्ञापयते पार्थाय कारणगीतया हि 'सर्वमूलं सनातनं सर्वकारणं च वस्तुस्वरूपं' समुपदिदेश, इति षष्ठाध्यायसंग्रहार्थः।

अथ सप्तमाध्यायसंग्रहार्थः।

एवमेव भवति सप्तमाध्यायार्थसङ्गतिः—अथ चैवं समुपदिष्टवस्तुस्वरूपं हि यथावच्च विज्ञाय, तन्निष्ठायाश्च कैवल्याख्यायाः समुचितं धर्मं च समाचरितुं तस्य जिज्ञासुरभवत्पार्थः, इति। अथ चाध्याये सप्तमे भगवान्कैवल्यनायकः सर्वशेषी च वासुदेवः "त्वक्चैव परिदह्यते" इति स्वस्य कर्मवश्यत्वेन कैवल्यनिष्ठोचितधर्मस्य दुःसाध्यत्वेन च स्वात्मनो मृत्युमाशङ्कमानाय श्वेतवाहनायाऽर्जुनाय ज्ञानविद्याफलं कैवल्याख्यं स्थानं तदुचितं धर्मं च व्याजहार, इति सप्तमाध्यायसंग्रहार्थः। अत्रेदमवधेयम्—योगब्रह्मविद्याप्रथमभागे च सांख्ये धर्मत्रयोपलक्षिते च प्रथमो ज्ञानव्यवसायश्च भवति। स च महत्कूटनियतो वस्तुत्रयनायको धर्मषट्कोपेतः पञ्चकारणश्चैकफलः, इत्यभिवर्णितम्, इति। एवं चाऽनेन प्रथमषट्केन ज्ञानपरेण 'तदात्मनः क्षेत्रज्ञस्य सफलं प्रथमं स्वतन्त्रसर्वेश्वरत्वलक्षणं च ज्ञानव्यवसायस्वरूपं हि' भगवता व्याख्यातम्, इति सिद्धान्तः।

अथाऽष्टमाध्यायसंग्रहार्थः।

इत्थं पुनरष्टमाध्यायार्थसङ्गतिर्विज्ञायते—एवं सर्वकैवल्य-

मूलज्ञानकैवल्याख्यस्थानविज्ञानी चाऽयमर्जुनः प्राकृतं च पाण्डित्यं संवहन्नपि, स्वविषमभावरूपकश्मलनिवर्तकोपायस्य जिज्ञासुः संबभूव, इति। अथाऽध्याये चाऽस्मिन्नष्टमे—सर्वेषामधिकारिणां कश्मलनिवर्तकस्वरूपस्य शिक्षको भगवान्वासुदेवः 'अधिकारिणां हि परमपुरुषविभूतिसामीप्यफलस्य ब्रह्मसंसारयोगस्य स्थैर्यलक्षणस्य कामादिषडङ्गस्य च मानसव्यवसायधर्मस्य निष्पत्तये हि नियतेषु चाङ्गेषु प्रथमं च स्वरूपं' स्वरूपगीतया व्याचख्यौ। अत्र हि क्रमशः 'दैवाऽऽसुरभावयोः स्वरूपम्, तत्स्वरूपाऽनुरूपाश्च विभूतयः, तदधिकारिणः, भगवत्स्वभावस्वरूपम्, तृतीयशुद्धभावस्वरूपम्, शास्त्रप्रामाण्यम्' इति च सर्वं व्याख्यातं भवति, इत्यष्टमाध्यायसंग्रहार्थः। अत्रेदमवधेयम्—सर्वेषां च संसारव्यवसायिनां यथाधिकारं हि फलं तु भवति कैवल्यम्। तच्च प्रतिसंसारं विजातीयनाम भवति, इत्यवगम्यते। तदिदं हि प्रथमव्यवसायिनां 'कैवल्यम्' इति, द्वितीयव्यवसायिनां 'भक्तिः' इति, तृतीयव्यवसायिनां 'सन्यासः' इति, तुरीयव्यवसायिनां 'योगः' इति संप्रतिपाद्यते। प्रथमव्यवसायिनां तेषां च 'आद्यस्थानस्य, तत्स्थाननायकस्य, तन्नायकशक्तेश्च विज्ञानमेव' ज्ञानकैवल्यम्। इदं च त्रिविधं 'प्रवृत्तिपरं निवृत्तिपरं शुद्धंचेति। एवं केवलानां चाधिकारिणां स्वनियतव्यवसायपूर्तिश्च सन्यासेन भवति, इति विज्ञायते। सोऽयं कर्मयोगफलस्वरूप इति विज्ञायते। तस्य हि 'कामेच्छासङ्कल्पचिन्ताध्यानभक्तयश्च'

इत्यङ्गषट्कोपेतो व्यवसायश्च मानसः कारणं भवति, इति च विज्ञायते। अतो ज्ञानकैवल्यभाजां चाधिकारिणां तदभिवर्णितो मानसव्यवसायश्च द्वितीयत्वेन नियत इति सिद्धान्तः। स च स्थैर्यलक्षणो भवति। 'स्थैर्येण च भवत्यात्मविभूतिः' इति विज्ञायते। अत एव भगवता "अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना" इति द्वितीयव्यवसायस्वरूपं चोच्यते। तदात्मभूतिप्रार्थकानां द्वितीयव्यवसायिनां च गतित्रयोपहितं स्वरूपं हि कश्मलनिवर्तकं च प्रथमं विज्ञेयम्, इति।

### अथ नवमाध्यायसंग्रहार्थः

इत्थं पुनर्नवमाध्यायार्थसङ्गतिर्विज्ञायते—पुर्वाध्यायार्थविज्ञानी चायमर्जुनः द्विविधानां बाह्यानामान्तराणां च सर्वेषां भावानां हि स्वरूपं धर्मलक्षणं सङ्कल्पबीजं च विजानन्नपि, विलुप्तस्वस्वरूपानुरूपकर्तव्यसंसारव्यवसायसाधनविज्ञानश्च सन्, तत्साधनस्वरूपजिज्ञासुरभवत्, इति। अथाऽध्यायेऽस्मिंश्च नवमे भगवान्श्रीकृष्णश्च 'तदभिवर्णितस्य स्थैर्यलक्षणस्य च धर्मस्य द्वितीयमङ्गं च साधनत्रयस्वरूपं धर्मं हि' भारतायार्जुनाय प्रोवाच। अत्र हि क्रमेण 'सर्वेषां देवासुरभावानां चाधिकारिणां प्रत्येकं गौणानि साधनानि श्रद्धारूपाणि च, तच्छ्रद्धाकार्ययज्ञस्वरूपम्, तद्यज्ञमूलस्य च त्रिविधस्य तपसः स्वरूपं सच्छब्दवाच्यं च व्याख्यातम्, इति नवमाध्यायसंग्रहार्थः।

### अथ दशमाध्यायसंग्रहार्थः

इत्थं पुनर्दशमाध्यायार्थसङ्गतिर्विज्ञायते—एवं पूर्वाध्यायार्थविज्ञाता चाऽयमर्जुनः सङ्कल्पनायिकायाः शक्तेश्च स्वरूपस्य जिज्ञासुरभवत्, इति। अथाऽध्यायेऽस्मिंश्च दशमे परमात्मप्रतिष्ठा च भगवान्वासुदेवः-'स्वव्याख्यातस्थैर्यलक्षणस्य च धर्मस्य तृतीयमङ्गं च साधनं शक्तिस्वरूपविज्ञानलक्षणं धर्मं सप्रकारं हि' किरीटिने पार्थाय समुपदिदेश। अत्र च क्रमशः—मायाख्यायाः सर्वेषां परावराणामधिकारिणां च व्यवसायनायिकायाः शक्तेश्च स्वरूपम्, तस्याश्च व्यवसायाः, तद्व्यवसायाधिकारिणः, तदधिकारिप्राप्यं फलं च शक्तिकार्यं हि व्याख्यातम्, इति दशमाध्यायसंग्रहार्थः।

### अथैकादशाध्यायसंग्रहार्थः

इत्थं पुनरेकादशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थवेत्ताऽयमर्जुनः तदभिवर्णितशक्तिकार्याणां च कर्मणां विरामरूपस्य परप्राप्तिहेतोश्च मोक्षस्वरूपस्य जिज्ञासुः संबभूव, इति। अथैकादशाध्याये च भगवान्वासुदेवः-'तदभिवर्णितस्य स्थैर्यलक्षणस्य च धर्मस्य तुरीयमङ्गं च साधनं मोक्षस्वरूपविज्ञानलक्षणं धर्मं हि' तस्मै पार्थाय व्याचख्यौ। अत्र हि क्रमशः-ज्ञानाधिकारिप्राप्यं च मनःस्वास्थ्यं मुक्तिलक्षणम्, तन्मनस्वास्थ्यमूलबुद्धिधृत्योश्च गुणतस्त्रैविध्यम्, गुणानां च त्रयाणां मानसाः प्रादुर्भावप्रकाराः, तत्प्रादुर्भावे च प्राणिनां प्रळयप्रकारः, मोक्षस्वरूपप्रतिपादन-

पूर्वकं सत्याऽसत्यगम्याऽयनस्वरूपम्, इत्यादिकं च व्याख्यातम्, इति चैकादशाध्यायसंग्रहार्थः।

अथ द्वादशाध्यायसंग्रहार्थः

इत्थं पुनर्द्वादशाध्यायार्थसङ्गतिर्विज्ञायते—एवं विदितमोक्षस्वरूपश्चाऽयमर्जुनः "ब्रह्मविदाप्नोति परम्" इति श्रुतेश्च मुमुक्षूणां परपदप्राप्तिपरमकारणं च ब्रह्मविज्ञानमभ्यर्थयते च भगवन्तमिति। अथाऽध्यायेऽस्मिंश्च द्वादशे परमेश्वरो नारायणः श्रीकृष्णाख्यः 'पूर्वं प्रतिपादितस्य स्थैर्यलक्षणस्य च धर्मस्य पञ्चमं साधनमङ्गं ब्रह्मविज्ञानलक्षणं मुमुक्षुवेद्यं च धर्मं' तस्मै च धनञ्जयाय प्रोवाच। अत्र हि क्रमशः—सर्वाधिकारिवेद्यमात्माऽनात्मशरीरं च ब्रह्मस्वरूपम्, तद्विज्ञानसाधनं दृष्टिः, तत्तदधिकारिविशुद्धविज्ञानमूलशुद्धमानसदृष्टिगोचराणि नानारूपाणि प्रशस्तसमस्तवस्तुजीवभूतानि च ब्रह्मस्वरूपाणि, स्थैर्यार्थिनां हि सर्वमूलसनातनब्रह्मविज्ञानस्याऽवश्यकत्वम्, तत्फलप्रभावं च व्याख्यातम्, इति द्वादशाध्यायसंग्रहार्थः।

अथ त्रयोदशाध्यायसंग्रहार्थः।

इत्थं पुनस्त्रयोदशाध्यायार्थसङ्गतिर्विज्ञायते—एवं विज्ञातब्रह्मस्वरूपश्च ब्रह्मविज्ञानी ब्राह्मणश्चायमर्जुनः, तद्ब्रह्मवित्प्राप्यविभूतेश्च जिज्ञासुरभवदिति। अथाऽस्मिन्नध्याये च त्रयोदशे भगवान्पुरुषोत्तमः श्रीकृष्णाभिधानः—'पूर्वमाख्यातस्य स्थैर्यलक्षणस्य च धर्मस्य षष्ठं चाङ्गं हि साधनं ब्रह्मविभूतिविज्ञानलक्षणं कामा-

दिपञ्चककारणं भक्त्यात्मकं च तद्ब्रह्मविज्ञान्यधिकारिसमधिग-म्यम्' कुरुश्रेष्ठायाऽर्जुनाय प्रोवाच। अत्र हि क्रमशः—सर्वत्र विशेषतो जीवभूततया ह्यवस्थितस्य च ब्रह्मणः स्वरूपम्, तद्वि-भूतिबीजं च व्याख्यातमिति त्रयोदशाध्यायसंग्रहार्थः। इत्थं हि द्वितीयषट्कसंग्रहार्थः समधिगम्यते—ततश्च लोकप्रतिनिधावर्जुने, सत्यामपि पूर्वषट्काधिकारिसमधिगम्यफलस्वरूपस्थानप्राप्तौ स्वा-भाविकया हि मायया त्रिगुणात्मिकया तत्स्थानाच्च च्युतेः संभ-वेन "न च शक्नोम्यवस्थातुम्" इति स्वस्याऽस्थैर्यमवबोधयति, तस्मै च भगवान्देवः प्रभुर्नारायणः द्वितीयषट्कगतैरध्यायैश्च षड्भिः क्रमेण—तदधिकारिणां स्वरूपम्, सुदृढतमावस्थितिसाधनानि, तत्तद्व्यवसायनिर्वाहिकायाः शक्तेश्च स्वरूपम्, तत्तदधिकारिपुरुष-व्यवसायसमाप्तौ प्राप्यत्वेन नियतस्य च मोक्षस्य स्वरूपम्, मुक्त-प्राप्यम्, परं च ब्रह्मसामीप्यं समीपसद्भिश्चाधिकारिभिः संवेद्यं ब्रह्मस्वरूपम्, ब्रह्मवित्प्राप्यविभूतिविज्ञानं चेति सर्वं संक्षिप्तं विस्तृतं च समुपदिदेश, इति। तथा चैवं संपूर्णेन द्वितीयषट्केन ज्ञानिनां चोर्ध्वदृष्टीनां तदितरेषां च स्वस्वरूपानुरूपदृढतमावस्थितिदायिनी भक्तिश्च नानाविधा विषयपरा, तत्तदधिकारानुरूपशक्तिसंभूता ब्रह्मविभूतिश्च यथातत्त्वं संप्रदर्शिता भवतीति विज्ञेम्। अत एव "अतश्चेयं हि सा भक्तिर्भवति ब्रह्मविज्ञानस्वरूपिणी, यया ह्यधि-कारिणां विभूतिश्च ब्राह्मी सञ्जायते। ततश्च प्रवृत्तानां निवृत्ता-नां शुद्धानां च द्वितीयव्यवसायिनां हि स्वतन्त्रपरस्थानविज्ञान-

पूर्विका कामेच्छासङ्कल्पचिन्ताध्यानकार्या च भक्तिर्ब्रह्मविभूति-जननी द्वितीयषट्केनाऽनेन व्याख्याता भवति भगवता, इति विज्ञायते" इति पूर्वाचार्यवचनं भवति। अत्रेदमवधेयम्—योग-ब्रह्मविद्याप्रथमभागे सांख्ये धर्मत्रयोपलक्षिते च द्वितीयो मानस-व्यवसायश्च भवति। स च मनस्तत्त्वकूटनियतो वस्तुत्रयनायको धर्मषट्कोपेतः पञ्चकारणश्चैकफलः, इत्यभिवर्णितम्, इति। तत-श्चैवमनेन भक्तिपरेण द्वितीयषट्केन 'तदात्मनः क्षेत्रज्ञस्य च सफलं द्वितीयं परमपुरुषविभूतिसामीप्यलक्षणं दृढतमावस्थिति-जनकं च मनोव्यवसायस्वरूपं हि भगवता व्याख्यातमिति सिद्धान्तः।

## अथ चतुर्दशाध्यायसंग्रहार्थः।

इत्थं पुनश्चतुर्दशाध्यायार्थसङ्गतिर्विज्ञायते, परमपुरुषवि-ज्ञानाधिकरणमनस्स्वास्थ्यप्रतिपादकपूर्वाध्यायार्थविज्ञानी च पार्थः, तन्मनस्स्वास्थ्यसाधनतमत्वेनाऽभिवर्णितस्याधिकारलक्षणस्य च क-र्मरूपस्याऽभ्यासयोगस्य जिज्ञासुः संबभूवेति। अथाऽध्यायेऽस्मिंश्च चतुर्दशे भगवान्श्रीकृष्णः 'तदभ्यासयोगं संबन्धरूपं साधनं षडङ्गं च कर्माख्यं हि विवक्षुः तत्प्रथमाङ्गं च प्राणायामस्वरूपं' व्या-चख्यै। तत्र हि प्रथमं परमपुरुषविज्ञानाधिकरणस्य च मनसो दुर्निग्रहत्वं तावता च चञ्चलस्वरूपत्वं चाऽभ्युपगम्य, ततस्तन्नि-वृत्तये च क्रमशः—योगप्रेप्सोरारुरुक्षोश्च योगिनः स्वारोहणस्य हि कर्मणामनुष्ठेयत्वेन कारणत्वम्, तथा प्राप्तयोगस्य चारूढ-

संज्ञकस्य च महात्मनो योगिनोऽप्यच्युतत्वसिद्धये हि साम्याव-स्थितिरूपशान्तेः कारणत्वम्, ततश्च शुभाश्रयध्यानसाधनकर्तुरी-प्सिततमकर्मस्वरूपम्, प्राकृतप्राणायामाख्यकर्मपराणां चाभ्यास-योगिनां ब्रह्मांशावेशस्वरूपं ब्रह्मसंस्पर्शं च फलम्, तत्परमपुरुषा-विष्टानां स्वभावम्, पतितानां च योगिनां गतिं च सफलाम्, अन्ततश्च परमपुरुषावेशार्थिनां चाधिकारिणां स्वात्मस्वरूपविज्ञान-पूर्वकब्रह्मशक्त्युपासनाया एव मुख्यत्वं च व्याजहार, इति चतु-र्दशाध्यायसंग्रहार्थः।

### अथ पञ्चदशाध्यायसंग्रहार्थः।

इत्थं पुनः पञ्चदशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्या-यार्थविज्ञानी चायमर्जुनः 'परगतेश्च पुरुषस्य ह्यावेशस्याऽसंभवेन तद्ब्रह्मशक्त्युपासनावैयर्थ्यमाशङ्कमानश्च, तदावेशयोग्यसर्वगत-परमात्मयोगस्वरूपजिज्ञासुः' समभवदिति। अथाध्यायेऽस्मिंश्च पञ्चदशे भगवान्वासुदेवः—तदभिवर्णिताभ्यासयोगस्य द्वितीयमङ्गं च परमात्मविज्ञानप्राप्तिप्रकारं विवक्षुः, प्रथमं तत्र परमपुरुषपर-मात्मावेशवतां दैवीप्रकृतिकानां दैवीशक्तिमतां चाधिकारिणामेव तद्दिव्योपदेशयोग्यस्वरूपत्वं चोपपाद्य, ततः क्रमशश्च—दैवीप्रकृ-तिस्वरूपम्, तदधिष्ठितपरमात्मस्वरूपम्, स्वदृष्ट्या हि क्षराऽ-क्षरवस्तुस्वरूपम्, तत्परमात्मस्वरूपं च सांसारिकपुरुषस्वरूपम्, शुद्धपरमात्मस्वरूपम्, परमात्मसंसारकार्यम्, परमात्मसंसाराधि-कारिणां स्वरूपं च सफलम्, परमात्मभावस्य सर्वव्यापकत्वेन सर्वो-

त्तमत्वम्, परमात्मस्वरूपाविष्टस्य च प्रत्यगात्मनो लक्षणम्, परमात्मावेशसाधनकर्मणश्च लक्षणम्, परमात्मस्थानं च शुद्धं व्याचख्यौ, इति पञ्चदशाध्यायसंग्रहार्थः।

### अथ षोडशाध्यायसंग्रहार्थः।

इत्थं हि षोडशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थविज्ञाता चाऽयमर्जुनः, तत्परमात्माऽक्षरस्वरूपजिज्ञासुरभवदिति। अथाऽध्यायेऽस्मिंश्च षोडशे भगवान्वासुदेवः-तदभिवर्णिताभ्यासयोगस्य तृतीयमङ्गं चाक्षरविज्ञानप्राप्तिप्रकारं विवक्षुः, तत्र प्रथमं तदक्षरस्वरूपं च प्रतिपाद्य, ततः क्रमशः-अक्षरोपासकानां स्वरूपम्, तेषां फलम्, तदुपासनास्वरूपम्, तदुपास्यवस्तुस्वरूपम्, शुद्धाऽशुद्धविभागेनाक्षरस्य द्वैविध्यम्, तद्विज्ञानफलम्, तदक्षरब्रह्मस्वभावम्, अक्षरोपासनायाः परमं फलं च व्याजहार, इति षोडशाध्यायसंग्रहार्थः।

### अथ सप्तदशाध्यायसंग्रहार्थः

एवं हि सप्तदशाध्यायार्थसङ्गतिर्विज्ञायते—एवं समुपपादितपूर्वाध्यायार्थविज्ञानी चाऽयमर्जुनः, तत्परमात्माऽक्षरब्रह्मस्वरूपविज्ञानप्रवचनपराया ब्रह्मकर्मविधायिकायाश्च विद्यायाः स्वरूपस्य जिज्ञासुः संबभूवेति। अथाध्यायेऽस्मिंश्च सप्तदशे भगवान्राजविद्याधिकारी च वासुदेवः—तदभिवर्णिताभ्यासयोगस्य तुरीयमङ्गं च राजविद्यास्वरूपं हि विवक्षुः, प्रथमं सर्वदोषनिवर्तकत्वेन राजविद्याया गुह्यतमत्वं चोपपाद्य, ततः क्रमशश्च—राजविद्यास्वरूपम्, राज-

विद्यावबोधितस्य योगाख्यस्य कर्मणश्च सर्वाधिकारिस्वीकार्यत्वम्, राजविद्याधिकारिणां च चतुर्णां स्वरूपम्, तदुपास्यवस्तुस्वरूपम्, तदधिकारिप्राप्यफलं च समुपदिदेश, इति सप्तदशाध्यायसंग्रहार्थः।

## अथाऽष्टादशाध्यायसंग्रहार्थः।

इत्थं हि तदष्टादशाध्यायार्थसङ्गतिर्विज्ञायते—एवं पूर्वाध्यायार्थवेत्ता चाऽयमर्जुनः, राजयोगिनां शुद्धानामुत्तमाधिकारिणां च परमहंसानां स्वरूपस्य विशेषतो जिज्ञासुरभवदिति। अथाऽध्यायेऽस्मिंश्चाष्टादशे भगवान्योगीश्वरो वासुदेवः—तदभिवर्णिताभ्यासयोगस्य पञ्चममङ्गं च परमहंसधर्मविज्ञानं समुपदिदिक्षुः प्रथमं परमहंसानां शिक्षां च व्याख्याय, ततः क्रमशः—परमहंसाधिकारिवेद्यब्रह्मस्वरूपम्, परमहंसानां श्रेष्ठतमत्वप्रकारम्, परमहंसानां सन्यासलक्षणधर्मस्वरूपम्, ध्यानस्यैव परमपुरुषावेशयोग्यसंस्थितिकारणत्वं च व्याजहार, इत्यष्टादशाध्यायसंग्रहार्थः।

## अथैकोनविंशाध्यायसंग्रहार्थः।

इत्थं हि तदेकोनविंशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थविज्ञाता च पार्थः तत्परमहंसजीवभूतः कर्मव्यवसायफलस्वरूपः शुद्धिलक्षणश्च यः सन्यासधर्मः, तस्य जिज्ञासुरभवदिति। अथाध्यायेऽस्मिन्नेकोनविंशे भगवाञ्शुद्धधर्मशास्ता च वासुदेवः—तदभिवर्णिताभ्यासयोगाङ्गं च षष्ठं सन्यासधर्मं सर्वेन्द्रियदुष्टविजृंभणविजयप्रदं च साङ्गं साधिकारं सफलं च यथातत्त्वं व्याच-

ख्यौ, इति चैकोनविंशाध्यायसंग्रहार्थः। ततश्चेत्थं पुनर्विज्ञायते तृतीयषट्कसंग्रहार्थः–अथ च पार्थः "भ्रमतीव च मे मनः" इति स्वाधिकारे च सुदृढमास्थितोऽपि, सर्वकारणस्य मनसः स्वभावाच्च चञ्चलत्वेन, ततश्च स्वाऽवस्थितिनाशकभ्रमस्य संभवेन, तस्य च स्वाधिकारच्युतिहेतुत्वेन च, तद्भ्रमनिग्रहोपायं भगवन्तं लोकसंरक्षकं च वासुदेवं पप्रच्छ। स चोवाच भगवान्पार्थाय तस्मै सन्यासगर्भं परव्यवसायक्षमं च कर्मयोगं समुपदिदिक्षुः, षट्केनाऽनेन तृतीयेन क्रमशः–कर्म च ब्रह्मयोगसाधनम्, ततो ब्रह्मयोगवेद्यस्य ब्रह्मणः पञ्चमूर्तेश्च स्वरूपम्, अथ चाऽक्षराख्यस्य ब्रह्मणः सर्वसंसारनायकस्य चाऽव्यक्तस्य स्वरूपम्, ततश्च भ्रमनाशिनीं च विद्याम्, ततस्तन्निष्ठानां परमहंसानां शुद्धानां च स्वरूपम्, ततश्च परसंसारव्यवसायकारणबीजदोषप्रथमशोधकं सन्यासस्वरूपं च व्याचख्यौ, इति। अत्रेदमवधेयम्–योगब्रह्मविद्याप्रथमभागे हि सांख्ये धर्मत्रयोपलक्षिते च कर्मव्यवसायश्च तृतीयो भवति। स च संपूर्णतत्त्वकूटनियतो वस्तुत्रयनायको धर्मषट्कोपेतः पञ्चकारणश्चैकफलो भवति, इति। तथा चैवं संपूर्णेन तृतीयषट्केन योगप्रेप्सुभिर्विज्ञेयं कर्म सन्यासगर्भं च यथावद्व्याख्यातं भवति। तस्मादधिकारिणां संबन्धलक्षणं च साधनविज्ञानं हि सञ्जायते, इति सिद्धान्तः।

## अथ विंशाध्यायसंग्रहार्थः ।

इत्थं हि तुरीयषट्कार्थसङ्गतिर्विज्ञायते—इत्थं त्रिभिः षट्कैश्चोपपादितानां 'उपासनाधिकरणसंसारेश्वरस्वरूपविज्ञानम्, उपासनाकरणसंसारेश्वरावतारस्वरूपविज्ञानम्, उपासनाधिकारिलक्षणकर्मनियामकभगवच्छुद्धसङ्कल्पासिद्धाधिकारस्वरूपविज्ञानम्, उपासनाकर्तृस्वरूपशिक्षकविद्यास्वरूपविज्ञानम्, उपास्यपरमकारणसंसारेश्वरवस्तुस्वरूपविज्ञानम्, उपासनाफलस्वरूपविज्ञानम्' इति, षडङ्गानां सांख्यसिद्धानां ज्ञानभक्तिकर्मनिष्ठानुरूपाणां च त्रयाणां व्यवसायानां हि तदेकत्वलक्षणयोगमूलत्वसिद्धये पुनस्तुरीयं योगपरं च षट्कमारभ्यते भगवता वासुदेवेन, इति। तत्र च पुनरित्थं विंशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थस्य कर्मयोगफलभूतस्य रागद्वेषनिवर्तकशुद्धिस्वरूपस्य च सन्यासस्य योगस्वरूपत्वेन कथनात्तत्सर्वधर्मोपसंहारपरस्य च योगस्य हि स्वरूपस्य जिज्ञासुरभवत्पार्थः, इति। अथाध्यायेऽस्मिंश्च विंशे भगवाञ्जनार्दनो वासुदेवः—योगव्यवसायाङ्गं च प्रथममात्मयोगं तस्मै पार्थाय समुपदिदेश। अत्र हि क्रमेण—यथासंसारं हि समुपास्यत्वेन विषयभूतानां परमात्माऽऽत्मजीवात्माऽक्षराणां च ब्रह्मस्वरूपाणां तथा पञ्चमस्य पुरुषस्य च तदेकत्वविज्ञानमूलं च योगस्वरूपम्, अक्षरोपासनायाश्च योगपरायाः प्रथमं कर्तव्यत्वेन मुख्यत्वम्, योगेन चात्मानमनुपासमानानां चाधिकारिणां निन्द्यत्वम्, आत्मोपासकानां च योगिनामेव त्यागित्वेन सर्वतः

श्रैष्ठ्यम्, आत्मयोगप्रकारः, आत्मयोगिनां प्राप्यं फलं च व्याख्यातम्, इति विंशाध्यायसंग्रहार्थः।

अथैकविंशाध्यायसंग्रहार्थः।

इत्थं पुनरेकविंशाध्यायार्थसङ्गतिर्भवति—पूर्वाध्यायार्थविज्ञाता चायमर्जुनः, तद्ब्रह्मस्वरूपपरमाद्याधिष्ठानभूतायाश्चाऽव्यक्तलक्षणायाः प्रकृतेर्नानात्वैकत्वविशिष्टस्य च स्वरूपस्य जिज्ञासुरभवत्, इति। अथाध्यायेऽस्मिंश्चैकविंशे भगवान्केशवः—योगाङ्गं च द्वितीयं प्रकृतियोगं हि व्याचख्यौ। अत्र च क्रमशः—क्षेत्रप्रकृतिस्वरूपम्, क्षेत्रक्षेत्रज्ञयोगविज्ञानस्योपादेयत्वेन मुख्यत्वम्, व्यष्टिभावोपलक्षितक्षेत्रप्रकृतिस्वरूपम्, परिणतप्रकृतिस्वरूपम्, महाप्रकृतिस्वरूपम्, सफलं च प्राकृतव्यवसायस्वरूपम्, कारणप्रकृतिस्वरूपम्, स्थूलप्रकृतिस्वरूपम्, प्राकृतानामधिकारिणां निष्ठा, सर्वत्र प्रकृतेरेवाऽऽत्मयोगेन कर्तृत्वम्, प्राकृतयोगिप्राप्यं फलं च व्याख्यातम्, इति चैकविंशाध्यायसंग्रहार्थः।

अथ द्वाविंशाध्यायसंग्रहार्थः

इत्थं पुनर्द्वाविंशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थवेत्ताऽयमर्जुनश्च 'तदभिवर्णितप्रकृत्यात्मयोगसंभूतव्यवसायेषु तद्योगाधिकारिलक्षणं कर्माख्यं च योगं तद्व्यवसायं च' विज्ञातुकामः संबभूव, इति। अथाध्याये द्वाविंशेऽस्मिंश्च भगवान्वासुदेवः 'पार्थाय तस्मै योगाङ्गं च तृतीयं कर्मयोगं च' व्याचख्यौ। अत्र हि क्रमशः—सामान्यतः कर्मणां प्रकृतिनियतत्वस्य

प्रतिपादनपूर्वकं तेषां विज्ञानस्याऽऽवश्यकत्वम्, निषिद्धकर्मणां स्वरूपम्, निषिद्धकर्मपराणां प्राप्यफलस्वरूपम्, यौगिककर्मस्वरूपम, यज्ञेन यज्ञयजनस्याऽऽवश्यकत्वम्, वर्णाश्रमधर्मप्रयुक्तकर्मस्वरूपम्, कर्मणामेवाधिकारलक्षणत्वम्, कर्मणां च सामान्यतः सदसद्रूपत्वम्, तत्तत्प्रकृत्यनुरूपकर्मणामेवाऽनुष्ठेयत्वेन मुख्यत्वं च व्याख्यातम्, इति द्वाविंशाध्यायसंग्रहार्थः।

अथ त्रयोविंशाध्यायसंग्रहार्थः।

इत्थं पुनस्त्रयोविंशाध्यायार्थसङ्गतिर्विज्ञायते—पूर्वाध्यायार्थविज्ञाता चायमर्जुनः 'तदात्मप्रकृतियोगसञ्जातव्यवसायेषु मध्यमं योगगर्भं शुद्धं भक्तिपरं मानसं च व्यवसायं हि' भगवन्तं पृच्छति, इति। अथाध्यायेऽस्मिंश्च त्रयोविंशे भगवान्वासुदेवस्तु—योगाङ्गं च तुरीयं भक्तियोगं हि तस्मै पार्थाय व्याचख्यौ। अत्र हि क्रमशः—आत्मोन्मुखमानसव्यवसायिनामुत्तमत्वम्, स्वविशुद्धसङ्कल्पपरिकल्पितेश्वरस्यैव स्वेष्टफलप्रदातृत्वम्, मानसव्यवसायस्वरूपम्, साधुलक्षणम्, भक्तानामेव योगिनामच्युतत्वम्, सामान्यं च भक्तियोगाधिकारिलक्षणम्, योगपरभक्तेश्चैव परमपुरुषभावनासाधनत्वम्, उपास्यदेवानां तद्देवोपासकानां च परस्परं भावनायाश्च श्रेयस्करत्वम्, मानसव्यवसायफलं च व्याख्यातम्, इति त्रयोविंशाध्यायसंग्रहार्थः।

## अथ चतुर्विंशाध्यायसंग्रहार्थः

इत्थं पुनश्चतुर्विंशाध्यायार्थसङ्गतिर्भवति—पूर्वाध्यायार्थवेत्ता चाऽयमर्जुनः सर्वेषां व्याख्यातानां च धर्माणां तृतीयमुपशमस्थानं हि 'किमिदम्' इति भगवन्तं पृच्छति, इति। अथाध्यायेऽस्मिंश्च चतुर्विंशे भगवान् शुद्धविज्ञानविग्रहो वासुदेवश्च 'योगाङ्गं च पञ्चमं ज्ञानयोगं हि' व्याचख्यौ। अत्र हि क्रमशः-शुद्धविज्ञानयोगस्य सर्वाप्ततमत्वेन सर्वानुग्राहकत्वं तथा सर्वगुह्यतमत्वम्, ज्ञानयोगपरस्य च कर्मणो विलक्षणवस्तुविषयाऽवगाहित्वेन प्रशस्तत्वम्, आत्मारामाणां निराश्रयाणां च ज्ञानयोगिनां निर्मलत्वम्, सर्वेषां च शुद्धविज्ञानकूटगामित्वम्, शुद्धज्ञाननिष्ठानामेव हि विधेः कर्मसंग्रहस्य च त्रैविध्यम्, शुद्धविज्ञानिनामपि लोकानुग्रहार्थं कर्मणामावश्यकत्वेन चाऽनुष्ठेयत्वम्, विना च ज्ञानयोगं ह्यनुष्ठीयमानानां सर्वेषां च कर्मणां सन्यासत्यागशुद्ध्यभावेन पुनर्जन्महेतुत्वम्, ज्ञानिभिः समुपास्यमानस्यैव 'ईश्वरस्य' सर्वाप्ततमत्वेन गुरुत्वम्, ज्ञानयोगिनां श्रैष्ठ्यम्, ज्ञानाधिकारिलक्षणम्, ज्ञानयोगिनां फलं च व्याख्यातम्, इति चतुर्विंशाध्यायसंग्रहार्थः।

## अथ पञ्चविंशाध्यायसंग्रहार्थः।

इत्थं पुनः पञ्चविंशाध्यायार्थसंङ्गतिर्विज्ञायते—पूर्वाध्यायार्थविज्ञाता चाऽयमर्जुनः सर्वसमाहारपरस्य च योगस्य जिज्ञा-

सुः समभवत्, इति। अथाऽध्यायेऽस्मिंश्च पञ्चविंशे भगवान्योगीश्वरो वासुदेवः—षष्ठं योगव्यवसायफलं च शुद्धयोगं ब्रह्मसामीप्यप्राप्त्युपायविज्ञानलक्षणं च शरणागतायाऽर्जुनाय समुपदिदेश। अत्र हि प्रथममध्यायानां त्रयोविंशत्या च व्याख्याताना मर्थानामुपसंहारपरं च योगधर्मं पुनः श्लोकानां त्रयोविंशत्या हि समुपदिश्य, परमां योगब्रह्मविद्याऽधिकारिसंसेव्यां च योगब्रह्मविद्यागायत्रीं द्वात्रिंशद्वर्णात्मिकां च चरमेण हि श्लोकेन समुपदिदेश, इति पञ्चविंशाध्यायसंग्रहार्थः। इत्थं पुनर्विज्ञायते तुरीयषट्कसंग्रहार्थः—अथाऽयमर्जुनश्च प्रथमम् "निमित्तानि च पश्यामि विपरीतानि केशव" इति नानाभावदर्शनेन तावता हि पुनरपि स्वस्य संभ्रान्तत्वेन च तादृशभ्रमनिवर्तकमुपायं च भगवन्तं पप्रच्छ। ततश्चैवं पृच्छते च तस्मै पार्थाय स चोवाच भगवान्योगीश्वरो वासुदेवः पुनस्तुरीयषट्केनाऽनेन सर्वधर्मोपसंहारपरं त्यागसंन्यासमूलमेकत्वलक्षणं च योगधर्मं हि व्याचख्यौ, इति। अत्र हि क्रमशः—प्रथममात्मयोगस्वरूपम्, तदात्माधिष्ठानप्रकृतियोगस्वरूपम्, तत्प्रकृत्यात्मयोगजकर्मयोगस्वरूपम्, तत्कर्मोपहितभक्तियोगस्वरूपम्, तद्भक्त्युपहितस्वसामर्थ्यविधेयज्ञानयोगस्वरूपम्, तज्ज्ञानयोगनिष्ठोपहितं योगब्रह्मविद्याधिकारिमुमुक्षुजनभोग्यं शुद्धं च योगस्वरूपं सरहस्यं हि व्याख्यातं भवति। अत्रेदमवधेयम्—योगब्रह्मविद्याद्वितीयभागेन च योगेन वस्तुत्रयनायको धर्मषट्कोपेतो योगव्यवसायश्च व्याख्यातो भवति। स

च तुरीयः शुद्धाऽव्यक्ततत्त्वकूटनियतश्च भवति, इति । अत एवेत्थम्—

“सा योगब्रह्मविद्या या प्रोक्ता भगवता पुरा ।
भवेत्काण्डद्वयोपेता चेति शुद्धैर्निगद्यते ॥
पूर्वस्मिन्नेव काण्डे तु ज्ञानं भक्तिश्च कर्म च ।
व्याख्यातं वासुदेवेन तदेतत्सर्वमेव हि ॥
शुद्धसांख्यमिति प्रोक्तं शुद्धविद्याधिकारिभिः ।
ज्ञानादीनां त्रयाणां हि योगमूलत्वदर्शनात् ॥
ज्ञानयोगो भक्तियोगः कर्मयोग इति क्रमात् ।
संज्ञाऽपि कथ्यते शुद्धयोगविद्याधिकारिभिः ॥
विना योगं च यज्ज्ञानं या च भक्तिश्च कर्म यत् ।
तत्केवलं ज्ञानमिति केवला भक्तिरित्यपि ॥
तथा च केवलं कर्म चेति नाम्ना ह्युदीर्यते ।
अतश्च केवलं सांख्यं योगहीनं निषिध्यते ॥
केवलत्वं च सांख्यानां योगाभावाद्धि कथ्यते ।
ततः सांख्ययोगयोस्तु चैकत्वं शास्ति योगिराट् ॥
केवलं ज्ञानिनां चैव भक्तानां धर्मगामिनाम् ।
कर्मठानां च सांख्यानां परप्राप्तिस्तु दुर्लभा ॥
ततश्चैव हि सर्वेषां सांख्यानामधिकारिणाम् ।
तत्परप्राप्तये चैव योगश्च विहितो भवेत् ॥

तस्मादेव ज्ञानिभिश्च भक्तैश्चैव हि कर्मठैः ।
योगश्चैव सुसेव्यः स्यात्तत्परप्राप्तये पुनः ॥
ततस्त्रयाणां षट्कानामन्ते भगवता पुनः ।
ज्ञानादीनां त्रयाणां च योगगर्भत्वमुच्यते ॥
सर्वेषां चैव सांख्यानां धर्माणां हि विशेषतः ।
शुद्धाऽव्यक्ततत्त्वकूटनियते योगलक्षणे ॥
शुद्धे च व्यवसाये तदुपसंहारदर्शनात् ।
तद्योगब्रह्मविद्याया द्वितीयं योगलक्षणम् ॥
काण्डं स्यादिति सिद्धान्तः शुद्धाचार्यनिरूपितः ।
तस्माद्योगब्रह्मविद्या प्रोक्ता काण्डद्वयात्मिका ॥
भवेदिति च सिद्धान्तः कथ्यते शुद्धदर्शनैः ।
अतश्च भगवद्गीता भवेत्काण्डद्वयात्मिका ॥
पूर्वकाण्डे भगवता व्याख्याताश्च यथाक्रमम् ।
योगगर्भाः सांख्यधर्मा भवन्तीति च निर्णयः ॥
उत्तरस्मिंश्च काण्डे हि शुद्धश्चैव सनातनः ।
एकत्वलक्षणश्चैव योगधर्मश्च कीर्तितः ॥ ”

इति, सनातनधर्मदीपिकायां योगब्रह्मविद्यास्वरूपं च काण्डद्वयात्मकं सरहस्यं हि व्याख्यातं च भवति, इति विज्ञायते । अत्रेद-मवधेयम्—सर्वेषां च मानवानां यथाधिकारं हि स्वनियताऽनुष्ठेय-व्यवसायसमाप्तिपूर्वकस्वपरप्राप्त्युपायविज्ञानाय हि दर्शनानि प्रवर्तन्ते । लोकाधिकारी च भगवान्ब्रह्मप्रतिनिधिर्नरनारायणः पुरु-

पोत्तमश्च सर्वेषां च तेषां दर्शनानां प्रवर्तको भवति । प्राकृतम्, आत्मीयम्, शुद्धम्, इति च दर्शनानां त्रैविध्यं हि विज्ञायते । तत्र हि प्राकृतमात्मीयमिति दर्शनद्वयं च सांख्यसिद्धं भवति । अतश्च सांख्यानामास्तिकत्वं नास्तिकत्वं च भवति । अतश्च 'सेश्वरं निरीश्वरं च भवति सांख्यदर्शनम्' इति श्रूयते । यदपि पुनस्तृतीयं शुद्धं दर्शनम्, तदेव ब्राह्मदर्शनम्, इति विज्ञायते । अत्र योगदर्शनं च तुरीयशुद्धब्रह्मविषयकम्, सांख्यदर्शनं च सगुणनिर्गुणब्रह्मविषयकम्, इति विवेकः, इति । अत एवोक्तम् —

"अधिकारी परं तत्त्वं येन जानाति तद्भवेत् ।
दर्शनं तद्धि विज्ञेयं ज्ञायते येन वै जगत् ॥
यथारूपं यथावस्थं यथालोकं यथाबलम् ।
यथायोगं यथाभक्ति यथाकर्म हि तद्भवेत् ॥
सर्वाणि दर्शनान्यत्र वदन्ति विषयत्रयम् ।
परं ब्रह्म तथैवाऽऽत्मा प्रकृतिश्च तथाऽपरा ॥
सर्वदर्शनविज्ञेयास्त्रयश्च विषया मताः ।
अनात्मदर्शनं चैकं तथात्मदर्शनं परम् ॥
ब्राह्मं च दर्शनं युक्तं तृतीयं योगदर्शनम् ।
सर्वदर्शनमूलं च सर्वाभ्युदयसाधनम् ॥
संसारेषु च सर्वेषु चतुर्षु मुनिपुङ्गवाः ।
त्रीण्येव दर्शनानीति वदन्ति श्रुतयः पराः ॥

सर्वाणि दर्शनान्यस्मिंश्चान्तर्भूतानि यै ततः ।
जीवभूतं दर्शनानां शुद्धं तद्दर्शनं भवेत् ॥ ”

इति, भगवता गोभिलेन भारतार्थकारिकायां दर्शनस्वरूपं हि व्याख्यातं भवति । अत्र जगच्छब्देन तत्त्वकूटानि तन्नियताश्च ज्ञानादयो व्यवसायाः, वाच्यत्वेनाऽभिहिता भवन्ति । तस्माद्योगब्रह्मविद्यायाः प्रथमो विभागश्च शुद्धसांख्यदर्शनव्याख्यानपरः, द्वितीयो विभागश्च शुद्धयोगदर्शनव्याख्यानपरः, इति शुद्धार्यसिद्धान्तः ।

इत्थं पुनः षट्कानां त्रयाणां तुरीयषट्कस्य च परस्परं प्रकृतिश्च मुख्यार्थनिर्णायिका तत्तत्षट्कमुख्यार्थविज्ञानादवगम्यते—प्रथमाध्यायान्ते हि “सीदन्ति मम गात्राणि” इत्यारभ्य “न चैतद्विद्मः कतरन्नो गरीयः” इत्यन्तेन चाऽर्जुनकृतानां त्रयोदशप्रश्नानां मुख्योऽर्थश्च भगवद्वासुदेवश्रीकृष्णसन्निधौ विज्ञापनीयः “कार्पण्यदोषोपहतस्वभावः” इति तदर्जुनवाक्येन चरमेण भवति विज्ञापितः, इति विज्ञायते। अत्र च कार्पण्यदोषोपहतत्वम्, तावता धर्मसंमूढचेतस्कत्वं च स्वस्याऽस्तीति समावेदितम्, इति भावः। कार्पण्यं च नाम तदेव भवति, येन हि पुनः ‘सर्वमावश्यकम्, सर्वं ब्रह्मस्वभावजम्, सर्वं तत्खल्विदं ब्रह्म’ इति प्रशस्तभावनाभिसिद्धोऽप्यात्मस्वभावो विशुद्धश्चोपहन्यते । तथा च स्वस्वरूपाविज्ञानमूलं च तदस्वातन्त्र्यमेव कार्पण्यमिति, सिद्धान्तः । तेनैव पुनरधिकारिणां स्वस्वरूपविज्ञानाभावः, स्वाधिकारच्युतिः,

यथेच्छं सञ्चरतां दुष्टेन्द्रियाणां च विजृम्भणम्, तथा स्वनियतानुष्ठेयधर्मसंमूढचेतस्कत्वं च पारतन्त्र्यलक्षणं हि संभवति । ततश्चैवं तादृशानामधिकारिणां हि सर्वत्र पारतन्त्र्यमेव । पारतन्त्र्यं च नाम तदेव भवति, यच्च पुनरभिवर्णितविशुद्धात्मस्वभावस्थित्यविज्ञानजन्यं हि भवति । स्वातन्त्र्यं च नाम तदेव भवति, यच्च पुनरभिवर्णितविशुद्धात्मस्थितिविज्ञानजन्यं भवति । अत एव "अधिकारिणामपहतात्मस्वरूपत्वमेव हि कार्पण्यम्, तच्च स्वार्थाग्रहदोषस्वरूपं भवति" इति भगवान्टङ्काचार्यः । एवं भगवानप्याह "कृपणाः फलहेतवः" इति । तस्माद्यश्च पुनः स्वार्थाग्रहदोषलक्षणः स्वविशुद्धात्मस्वातन्त्र्यप्रणाशकः कार्पण्यदोषः स्वपारतन्त्र्यहेतुश्च, तस्य निवृत्त्युपायसंशिक्षकं तथा निवृत्तकार्पण्यदोषाधिकारिसंवेद्यं च धर्मानुशासनं भगवन्तं हि सप्रणाममपृच्छत्पार्थः; इति तत्पार्थचरमप्रश्नतात्पर्यार्थो विज्ञायते । ततश्चैवं पृच्छते च तस्मै पार्थाय भगवान्वासुदेवः—योगब्रह्मविद्यासमधिगम्यं शुद्धात्मस्वातन्त्र्यलक्षणं च परमं धर्मं समुपदिदिक्षुः, तत्र प्रथमम् "अशोच्यानन्वशोचस्त्वम्" इत्यारभ्य "योगी परं स्थानमुपैति चाद्यम्" इत्यन्तैश्च प्रथमषट्कोपदेशैः शुद्धसांख्यसिद्धं योगब्रह्मविद्याप्रथमपादाधिकारिसंसेव्यं ज्ञाननिष्ठालक्षणं वस्तुत्रयनायकं त्रिविधं षडङ्गं च धर्मं हि यथावच्च व्याख्याय, ततश्च "अभयं

सत्त्वसंशुद्धिः" इत्यारभ्य "परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्" इत्यन्तैश्च द्वितीयषट्कोपदेशैः प्रार्थनालक्षणं द्वितीयपादाधिकारिसंवेद्यं पूर्ववद्विशेषणविशिष्टं स्वात्मस्वरूपाऽवस्थितिसाधनाधिष्ठानसमनियतं धर्मं हि परमपुरुषविज्ञानरूपं च यथावच्च संप्रतिपाद्य, ततः "असंशयं महाबाहो मनो दुर्निग्रहं चलम्" इत्यारभ्य "पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्" इत्यन्तैश्च तृतीयषट्कोपदेशैः पूर्ववद्विशेषणविशिष्टं तृतीयपादाधिकारिसंवेद्यं स्वनियतानुष्ठेयधर्मविरोधिदुष्टेन्द्रियविजृम्भणविजयहेतुं तदुक्तदृढतमावस्थितिकारणैकात्म्यप्रत्ययात्मकसङ्कल्पपरिकल्पितपरमपुरुषविज्ञानजन्यं सर्वाधिकारलक्षणं च धर्मं ह्यविशेषेण व्याचख्यौ। त्रयाणामेषां षट्कानां परस्परं कार्यकारणभावसिद्धा हि सङ्गतिर्भवति। ततश्च पुनर्भगवान्वासुदेवः—सत्यपि विनष्टे स्वार्थाग्रहदोषे, प्रबलतमशुद्धात्मस्वातन्त्र्यसंपादनोपायम् "विस्तरेणात्मनो योगं विभूतिं च जनार्दन" इति शुद्धब्रह्मस्वरूपात्मयोगं च पृच्छते पार्थाय भगवान्वासुदेवश्च "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्यारभ्य "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इत्यन्तैश्च तुरीयषट्कोपदेशैर्योगब्रह्मविद्यातुरीयपादाधिकारिसंवेद्यं वस्तुत्रयनायकं कार्यकारणलक्षणं षडङ्गं त्रिविधं च विवक्षितं योगधर्मं हि व्याचख्यौ। अत्रापि षट्कानां त्रयाणां तुरीयषट्कस्य च भवति कार्यकारणभावसङ्गतिः, इति।

### अथ षड्विंशाध्यायसंग्रहार्थः ।

इत्थं पुनः षड्विंशाध्यायार्थसङ्गतिर्विज्ञायते—अथ चायमर्जुनो हि विदिताखिलधर्मरहस्यार्थः "अहो बत महत्पापम्" "गुरूनहत्वा हि महानुभावान्" "न चैतद्विद्मः कतरन्नो गरीयः" इत्यादिभिश्च स्वबन्धुवधे महनीयाचार्यवधे च पापम्, तथा जयापजययोरनिर्णेयत्वं च सन्निधौ च भगवतस्तस्याऽऽशङ्कमानः स्वनियताऽनुष्ठेयधर्मसन्दिग्धचित्तश्च संबभूव, इति । अथाध्यायेऽस्मिंश्च षड्विंशे भगवान्वासुदेवः—वक्तव्यविशिष्टार्थव्याख्यानपरै रेकत्रिंशदुपदेशैश्च—स्वधर्मम्, संसारेऽस्मिंश्च सर्वेषां च मानवानां स्वाऽनुरूपधर्मस्य कर्तव्यत्वेनाऽऽवश्यकत्वम्, तथा जयापजययोरपि सफलत्वम्, शिष्यधर्मम्, परमाचार्यधर्मम्, स्वोपदिष्टगीतामाहात्म्यं च व्याचख्यौ । अथ च कृतकृत्यं चात्मानं मन्वानश्च पार्थः—एवं प्रबलतमस्वार्थाग्रहदोषनिवर्तकधर्मोपदेष्टरि सर्वाप्ततमे स्वोपास्ये च भगवति नारायणे स्वाऽनुरूपकार्तज्ञ्यविज्ञापनपूर्वकं हि द्वादशवाक्यैस्तुष्टाव हि तं भगवन्तं च वासुदेवम् । ततः सञ्जयो योगी च, स्वार्थावेशेन धर्माऽधर्मविवेकरहिताय तत्त्वजिज्ञासवे च तस्मै धृतराष्ट्राय, सप्तभिरुपदेशैः—स्वोक्तभगवदुपदेशस्वरूपम्, पाण्डवस्वरूपनिरूपणव्याजेनाऽऽत्मविदां स्वभावं, स्वरूपम्, तथा ब्रह्मस्तुत्यवतारिकां च व्याचख्यौ । अथ सञ्जयेन पुनश्च धृतराष्ट्राय श्रीकृष्णमाहात्म्यसंवादिनी ब्रह्मदेवकृता स्तुतिश्चैकोनविंशत्या ह्युपदेशानां समुपदिष्टा। स च पुनश्चतुर्भिरुपदेशैश्च स्वस्य हि तद्भगवदुपदिष्टश्रीभ-

गवद्गीतार्थग्रहणधारणपटुत्वनिदाननिरूपणपूर्वकं तदात्मविदां विभूतिं च व्याचख्यौ, इति षड्विंशाध्यायसंग्रहार्थः। अध्यायश्चायं हि षड्विंशः समष्टिप्रणवव्याख्यानपर इति वदन्ति पूर्वाचार्याः। किं च योगब्रह्मविद्यामालामन्त्रस्वरूपा श्रीकृष्णस्तुतिश्चात्र प्रतिपादिता भवतीति कैश्चिदाचार्यैरुच्यते। वक्तव्यं च शिष्टं ह्यग्रे वक्ष्यते। तस्मादेवमुपपादितः समग्रगीतर्थसंग्रहश्च श्रीभगवद्गीतार्थबुभुत्सुभिरधिकारिभिश्च प्रथमं विज्ञेयः, इति सिद्धान्तः।

### ७. अथ भगवद्गीताशब्दरहस्यार्थनिरूपणम्।

इत्थं हि भगवद्गीताशब्दरहस्यार्थोऽवगम्यते—यस्याः पुनरध्ययनेन हि समष्टिव्यष्टचात्मकमहावाक्यस्वरूपप्रणवशब्दवाच्ययोगब्रह्मविद्यावधेयब्रह्मस्वरूपविज्ञानम्, तद्व्यष्टिसमष्टयुपहितव्यवसायाङ्गभूतधर्मविज्ञानम्, विशेषतश्च तत्तदधिकारिस्वरूपविज्ञानम्, "सर्वधर्मान्परित्यज्य" इत्यादिपादैश्चतुर्भिश्चोपहिताया योगब्रह्मविद्यागायत्र्याः स्वरूपस्य तदर्थस्य च विज्ञानम्, 'सर्वं ब्रह्मस्वभावजम्, सर्वमावश्यकम्, सर्वं तत्खल्विदं ब्रह्म' इति विज्ञानं च तत्तदधिकारिसमधिगम्यप्रयोजनरूपं हि सञ्जायते ; सैव हि भवति भगवद्गीता च योगब्रह्मविद्या। इयमेव हि 'सर्वाधिकारिवेद्या सर्वदर्शनावधेयसनातनधर्मबोधिका च' इत्यादिकमुक्तम्। इत्थं किल निरुक्तो भवति भगवद्गीताशब्दश्च पूर्वाचार्यैः—अस्त्यत्र हि भगवती-गीता, इति व्यस्तं पदद्वयम्। तत्र 'भगवती' इति शब्दश्च—भश्च गश्च भगौ, तावस्यां स्तः, इति व्युत्पादितः।

अत्र च—भकारेण नानारूपं संसारपरं च ब्रह्मस्वरूपं तद्विज्ञानिनां निष्ठा चाभिधीयते । गकारेण तु—तदेकस्वभावमेकस्वरूपं च ब्रह्मस्वरूपं तद्विज्ञानिनां निष्ठा चाऽभिधीयते । तदभिवर्णितमुभयं च यस्यां विद्यायां प्रतिपाद्यतया विज्ञेयतया च विराजते, सैव भवति भगवती विद्या। एवमेव "व्यष्टिपरं ब्रह्मस्वरूपं तद्ब्रह्मस्वरूपानुरूपसंसारश्च त्रितयात्मकस्तदङ्गधर्माः, इत्यादिकं सर्वं हि 'भ' इति शब्दवाच्यं भवति । एवं 'ग' इति शब्देन समष्टिपरं ब्रह्मस्वरूपं तद्ब्रह्मस्वरूपविज्ञानानुरूपः सनातनश्चैकरूपः साङ्गो योगव्यवसायः, इत्यादिकं सर्वमपि चाभिहितं भवति । या च पुनर्विद्या तदभिवर्णितं चोभयमप्यधिकारिणः शिक्षयति, सैव हि भवति भगवती विद्या । अतश्चोच्यते—'भः, इति सांख्यविद्या, गः, इति योगविद्या' इति । तस्माद्भवति भगवती विद्या च योगब्रह्मविद्याभिधा" इति भगवान्टङ्काचार्यः । शास्त्राणां तथा विद्यादीनां च पूज्यतमाख्या हि 'गीता' इति । ततश्चैव भवति—भगवती च सा गीता च भगवद्गीता, इति। अत एव हि "इयमेकैव भवति चतुर्विंशतिगीतात्मिका 'सांख्यकाण्डं योगकाण्डं' इति काण्डद्वयात्मिका च योगब्रह्मविद्या हि भगवद्गीता, इति ।अत एव हि श्रुतीतिहासादिषु च ब्रह्मविद्यास्वरूपेषु 'ब्रह्मगीता-शुकगीता-श्रुतिगीता' इत्याद्याः केवलं गीतान्ता हि विद्याश्च विज्ञायन्ते । ततश्च योगब्रह्मविद्यैव भवति भगवद्गीताऽभिधा विद्या । अत्र भगशब्दभ्यां शुद्धसांख्ययोगावभिधीयेते" इति भगवान्शंकरः । "इत्थमपि

भगवतीशब्दश्च निरुक्तो भवति—त्र्यर्थको हि भगवतीशब्दः। भश्च गश्च वश्च यस्यां, सा विद्या भवति भगवती, इति। अत्र च भकारेणाभिहितं भवति षडङ्गं च प्रवृत्तिसमीकरणम्, तथा गकारेण तादृशं च निवृत्तिसमीकरणम्, एवं वकारेण शुद्धसमीकरणं च तादृशम्, अभिधीयते। एवं तदुक्तार्थत्रयवैशिष्ट्यं हि 'ती' इति शब्देन चोच्यते। ततश्च साङ्गं समीकरणत्रयं हि भगवत्याख्यया व्याख्यातं भवति, इति बुध्यते। तस्मादेव हि श्रीभगवद्गीता च समधीयते स्वार्थदोषमुमुक्षुभिः परप्रेप्सुभिश्च योगिभिः। अतश्च श्रीभगवद्गीताशास्त्रं हि योगब्रह्मविद्यास्वरूपं च सर्वैरधिकारिभिश्चाध्येयं भवति" इति गणयोगिनो वदन्ति। इत्थमेव हि सनातनधर्मदीपिकायाम्—

"इत्थं हि भगवद्गीताशब्दो व्युत्पाद्यते परैः।
भगशब्दो द्व्यक्षरः स्यात्सांख्ययोगार्थकस्तथा॥
चेतनाचेतनौ चैव शाश्वतौ च सशक्तिकौ।
सनातनौ च तद्धर्मौ भकारेण तु कीर्तितौ॥
अनयोर्नित्ययोगश्च दृष्टित्रयसमावृतः।
संभर्तृत्वं च भर्तृत्वं तथैव हि निगद्यते॥
अशुद्धश्चैव शुद्धश्च सोऽयं योगो भवेत्ततः।
इत्थं चैवात्मगीतायास्तुरीये चरणे पुनः॥"

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥
समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ "
इत्यात्मानात्मनोश्चैव व्यवसायार्थकस्य च ।
शुद्धस्य नित्ययोगस्य शिक्षा तु गदिता भवेत् ॥
इयं शिक्षा भकारार्थसिद्धा चैव समाकृतिः ।
अनया शिक्षितश्चैव प्राप्नोति परमं पदम् ॥
संभर्तृत्वमशुद्धत्वं चेतनस्यात्मनश्च हि ।
भवत्यचेतनयोगात्प्राकृताच्चेति निर्णयः ॥
तथा चैव हि शुद्धत्वं भर्तृत्वं चेतनस्य च ।
जायते हि स्वयोगाच्च तथैव हि निगद्यते ॥
गकारेण ब्रह्म शुद्धं सर्वमूलं सनातनम् ।
आत्मानात्मस्वरूपं च योगप्राप्यं निगद्यते ॥

तदाभ्यां भगशब्दाभ्यां ब्रह्मणः प्रणवस्य च ।
तद्व्यष्टिसमष्टिरूपं स्वरूपं चाभिवर्णितम् ॥
एवमर्थद्वयं चोक्तं यस्यां च प्रतिपाद्यते ।
सैव विद्या भगवती भवेदिति निगद्यते ॥
या वै भगवती विद्या सांख्ययोगपरा भवेत् ।
सा योगब्रह्मविद्येति निरुक्ता शुद्धयोगिभिः ॥
इति केचिन्महात्मानस्तस्यार्थं प्रवदन्ति हि ।
इत्थं चापि तदर्थश्च व्याख्यातः शुद्धयोगिभिः ॥
न तद्ब्रह्म परिज्ञेयं संसाराद्यत्परं भवेत् ।
इति वेदान्तसिद्धान्तात्सर्वस्मादवगम्यते ॥
यच्च संसाररूपं हि भवेद्ब्रह्म सनातनम् ।
सोऽयमात्मेति पुंलिङ्गशब्देनैवात्र कीर्त्यते ॥
प्रकृतेरात्मनस्तस्य व्यवसायास्त्रयश्च हि ।
योगेनैव हि जाताश्च सांख्यसिद्धा भवन्ति च ॥
व्यवसायैस्त्रिभिश्चैव सांख्यास्ते चाधिकारिणः ।
ज्ञानभक्तिकर्मनिष्ठा जगद्रूपं च ब्रह्म यत् ॥
उपासते यथाधर्ममात्मरूपं च तत्पुनः ।
भकारवाच्यं तद्ब्रह्म नानारूपमितीर्यते ॥
तदेव ज्ञानिभिश्चैव भक्तैः संन्यासिभिः पुनः ।
समुपास्यमिति ह्येष सिद्धान्तः सांख्यसंमतः ॥

यदा सांख्याश्च युक्ताः स्युः शुद्धास्ते स्युस्तदैव हि ।
अतश्च ज्ञानयोगीति भक्तियोगीति वै तथा ॥
कर्मयोगीति नाम्ना हि शुद्धसांख्यश्च कीर्तितः ।
तत्र च ज्ञानयोगी च सांख्यो यः प्रथमो मतः ॥
सोऽयं हि मुक्तये चैव तत्परप्राप्तये तथा ।
प्रवृत्तबुद्धिसङ्कल्पकल्पितेश्वरविग्रहम् ॥
परमात्मस्वरूपं च यच्च ब्रह्म सनातनम् ।
तस्योपासनया चैव तस्य सामीप्यमश्नुते ॥
द्वितीयो भक्तियोगी च भक्त्या चैव प्रवृत्तया ।
स्वेप्सितं चैव सङ्कल्प्य ब्रह्म चैव सशक्तिकम् ॥
नानारूपं ध्येयबिम्बं ह्युपास्यैव शुभाश्रयम् ।
ब्रह्मणस्तस्य सामीप्यं प्राप्नोतीति च निर्णयः ॥
तृतीयः कर्मयोगी च केवलं क्रिययैव हि ।
स्वेष्टं च परमात्मानं साकारं सायुधं तथा ॥
सरूपं सास्पदं चैव सङ्कल्प्य हि विशेषतः ।
तं च वै कर्मणा पूज्यं समुपास्य विशेषतः ॥
प्राप्नोति ब्रह्मसामीप्यं पुनरावृत्तिवर्जितम् ।
एवं वै शुद्धसांख्यानां स्वरूपं समुदाहृतम् ॥
इयान्वै शुद्धसांख्यस्य धर्मत्रयपरस्य हि ।
तथा केवलसांख्यस्य भेदश्चैव विभाव्यते ॥

ज्ञानिनां चैव सांख्यानां केवलज्ञाननिष्ठया ।
प्राप्यं स्यात्स्वात्मकैवल्यं चेति वेदानुशासनम् ॥
तथा चैव हि भक्तानां सांख्यानां च प्रयोजनम् ।
विभूतिर्ब्रह्मणश्चैव भवेदिति च निर्णयः ॥
एवं वै कर्मठानां च सांख्यानां पुण्यगामिनाम् ।
तत्कर्मणः फलस्यैव भवेत्प्राप्तिः प्रयोजनम् ॥
एवं केवलसांख्यानां त्यागसंन्यासयोः पुनः ।
अभावान्न परप्राप्तिः पुनरावृत्तिवर्जिता ॥
ये च शुद्धाश्च सांख्याः स्युस्तेषां प्रत्येकमेव हि ।
सर्वमूलसनातनशुद्धब्रह्मधियैव च ॥
कार्याणां चैव धर्माणां कर्तव्यतेन निश्चयात् ।
त्यागसंन्यासयोश्चैव ततश्चैव हि संभवात् ॥
प्राप्तिर्योगस्य परमं प्रयोजनमितीर्यते ।
एतेषां स्यात्परप्राप्तिः पुनरावृत्तिवर्जिता ॥
ततः केवलसांख्यानां न परप्राप्तिरुच्यते ।
शुद्धानां चैव सांख्यानां परप्राप्तिस्तु कथ्यते ॥
आस्तिक्यं चैव नास्तिक्यं चेतनाचेतनोज्ज्वलम् ।
शास्त्यस्मान्केवलं सांख्यं चैवं योगं सनातनम् ॥
शुद्धब्रह्मोज्ज्वलं चैव शास्त्यस्मानधिकारिणः ।
धर्मत्वयोज्ज्वलं चैव शुद्धसांख्यमितीर्यते ॥

प्रवृत्तिश्च निवृत्तिश्च व्यवसायेषु च त्रिषु ।
जायते केवलात्सांख्यादिति पूर्वं निरूपितम् ॥
अनेन स्वार्थदोषश्च वृद्धः स्यादधिकारिणाम् ।
एवं शुद्धस्थितिश्चैव योगे चैव सनातने ॥
शुद्धसांख्याद्भवेच्चेति व्याख्यातं शुद्धयोगिभिः ।
स्वार्थदोषश्च नष्टः स्याच्छुद्धसांख्यनिषेवणात् ॥
अतो मुख्यं हि सांख्यं स्यात्तथा योगः सनातनः ।
अतो भशब्दवाच्यश्च सांख्यधर्म इतीर्यते ॥
ततो गकारवाच्यं हि ब्रह्म तच्च निगद्यते ।
यद्वै शुद्धं योगलिङ्गं विशिष्टं कारणं भवेत् ॥
शुद्धं तच्च परं ब्रह्म विशुद्धं योगलक्षणम् ।
अन्तरङ्गैर्योगिभिश्च सांख्यैश्चैवाधिकारिभिः ॥
ज्ञानिभिश्चैव भक्तैश्च कर्मठैः प्राकृतान्वयैः ।
समुपास्यं भवेच्चेति कथ्यते शुद्धदर्शनैः ॥
एवमुक्तं महार्थं या शिक्षयत्यधिकारिणः ।
सैव विद्या भगवती भवेदिति च निर्णयः ॥
तस्मादात्मा विशुद्धश्च सच्चितानन्दविग्रहः ।
अविमुक्तस्वभावश्च योगशक्त्या समन्वितः ॥
उत्तमः पुरुषश्चेति प्रज्ञया ह्यभिवर्णितः ।
जिज्ञास्य इति सिद्धान्तो भगवद्गीतयोच्यते ॥

आस्तिकं ब्रह्मतत्त्वं च नास्तिकं च तथैव हि ।
शुद्धं सत्यं ब्रह्मतत्त्वं भगवद्गीतयोच्यते ॥
प्रवृत्ता च निवृत्ता च शुद्धा चैव स्थितिश्च या ।
आत्मनः प्रकृतेर्योगात्ताश्च सर्वा यथाक्रमम् ॥
भगवद्गीतया चैव व्याख्याताः स्युरितीर्यते ।
इति कैश्चिच्च पूर्वार्यैर्व्याख्यातं धर्मकोविदैः ॥
अथेत्थमपि पूर्वार्यैर्व्याख्यातः शुद्धयोगिभिः ।
सोऽयं भगवतीशब्दः प्रणवार्थश्च पञ्चभिः ॥
प्रकाशश्च भकारार्थः प्रकाशः सोऽयमेव हि ।
व्यष्टिप्रणववाच्यः स्यादिति ज्ञेयं मनीषिभिः ॥
अप्रकाशो गकारार्थः समष्टिप्रणवार्थदः ।
बिन्द्वर्थकः सोऽप्रकाश इति श्रुतिभिरुच्यते ॥
प्रकाशश्चाप्रकाशश्च ब्रह्मणो हि स्वभावजः ।
ब्रह्म तच्चैव शुद्धं स्यादिति श्रुतिभिरुच्यते ॥
यया ह्येवं ब्रह्मतत्त्वं जिज्ञास्यं सांख्ययोगिभिः ।
सा स्याद्भगवती विद्या चेति सा परमा भवेत् ॥
इत्थं भगवतीशब्दो व्याख्यातो मण्डले पुनः ।
भशब्देनोदितं धर्मक्षेत्रं चैव परावरम् ॥
गशब्देनोदितं तच्च कुरुक्षेत्रं हि तादृशम् ।
ते चोभे तस्य शुद्धस्य ब्रह्मणो हि स्वभावजे ॥

तदेवं ब्रह्मतत्त्वं च या च व्याख्याति तत्त्वतः ।
सा वै भगवती विद्या भवेदिति निगद्यते ॥
इत्थं भगवतीशब्दो निरुक्तोऽस्ति च तत्त्वतः ।
अविद्या हि भकारेण प्रोक्ता स्यादेवमेव हि ॥
विद्या चैव गकारेण ते चोभे ब्रह्मणः पुनः ।
शुद्धस्य च स्वभावाद्धि सिद्धे स्यातां च तत्त्वतः ॥
यया ते वर्णिते सा तु विद्या भगवती भवेत् ।
इति कैश्चिच्च पूर्वार्यैर्व्याख्यातं मण्डले पुनः ॥
इत्थं हि कमलाक्षेण जनकायाभिवर्णितः ।
सोऽयं भगवतीशब्दो विस्तरेण च मण्डले ॥
सर्गश्चैव भकारार्थो विसर्गश्चैव योगजः ।
गकारार्थौ भवेत्तौ च ब्रह्मणो हि स्वभावजौ ॥
यया तौ वर्णितौ सा तु विद्या भगवती भवेत् ।
इति तस्मात्सेयमेव वेद्या स्याच्च मुमुक्षुभिः ॥
इत्थं वै भगवद्गीताशब्दो व्युत्पाद्यते बुधैः ।
तथा च भगवच्छब्दो निरुक्तश्चैव योगिभिः ॥
ये वासुदेवरेखायां संस्थिताश्चाधिकारिणः ।
सङ्कल्पसूत्रसिद्धाश्च गणिताः सप्त सप्तभिः ॥
तेषां सर्वस्य धर्मस्य नियन्ता कालनायकः ।
भगवानिति शब्देन प्रोच्यते ब्रह्मवादिभिः ॥

तथा भगवदंशश्च नरनारायणो मुनिः ।
जगतां स्वस्तये सोऽयं विष्णोर्लोकात्समागतः ॥
विशालबदरीक्षेत्रे तपस्यास्ते जगद्गुरुः ।
कृष्णस्तदंशभूतः स्यादिति भारतभाषितम् ॥
अतोऽसौ भगवान्कृष्ण इति श्रुतिभिरुच्यते ।
यतो योगब्रह्मविद्या गीता भगवतोदिता ॥
ततः सा भगवद्गीतेत्युच्यते धर्मकोविदैः ।
इति सा भगवद्गीता वेद्या स्यादधिकारिभिः ॥
इत्थं वै भगवद्गीता वर्णितास्ति महर्षिभिः ।
यया हि भगवद्रूपं प्रोच्यते धर्मलक्षणम् ॥
विज्ञानाद्यस्या मुक्ताश्च योगिनः स्युश्च मानवाः ।
सा चैव भगवद्गीता भवेदिति च कीर्तितम् ॥
तद्वै भगवतो रूपं स्वरूपं मुनिना पुरा ।
पराशरेण कथितं मैत्रेयाय हि सादरम् ॥
इत्थं पराशरेणोक्तं शृणुष्व मुनिपुङ्गव ।
तच्च वै मनुना प्रोक्तमिति तेनैव कथ्यते ॥
मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ।
तदेतच्छ्रूयतामत्र संबन्धे गदतो मम ॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

द्वे विद्ये वेदितव्ये वै वदत्याथर्वणी श्रुतिः ।
परया त्वक्षरप्राप्तिः ऋग्वेदादिमया परा ॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥
विभु सर्वगतं नित्यं भूतयोनिरकारणम् ।
व्याप्य व्याप्तं यतः सर्वं यद्वै पश्यन्ति सूरयः ॥
तद् ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ।
योगिनो यच्च पश्यन्ति तुरीयेऽव्यक्तलक्षणे ॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥
एवं निगदितार्थस्य सत्तत्त्वं तस्य तत्त्वतः ।
ज्ञायते येन तज्ज्ञानं परं चान्यत् त्रयीमयम् ॥
अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ।
पूजायां भगवच्छब्दः क्रियते तूपचारतः ॥
यथा प्रणवशब्दश्च सच्चिदानन्दलक्षणे ।
परे ब्रह्मणि शक्तश्च भवेदेवोपचारतः ॥
तथायं भगवच्छब्दो गायत्रीलक्षणे परे ।
त्रित्वैकत्वस्वरूपे च शक्तः स्यात्परमात्मनि ॥
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
भगवान्वासुदेवश्च कीर्त्यते हि सनातनः ।
इति भारतवेदेन कीर्तितं मुनिपुङ्गव ॥
यथाधिकरणं तस्य स्वरूपं दर्शनेषु च ।
व्याख्यातं तच्च विज्ञेयं रहस्यं मुनिपुङ्गव ॥
स ईश्वरो व्यष्टिसमष्टिरूपो
व्यक्तस्वरूपः परमस्वरूपः ।
सर्वेश्वरः सर्वदृक्सर्वविच्च
समस्तशक्तिः परमेश्वराख्यः ॥
स ज्ञायते येन तदस्तदोषं
शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यवगम्यते वा
तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥
इति तद्भेषजं शुद्धं शासनं च मनोः पुनः ।
व्याख्याय हि ततस्तच्च भगवद्रूपमेव हि ॥
तद्योगब्रह्मविद्यायां प्रतिपाद्यतया भवेत् ।
इत्थं तुष्टाव धर्मात्मा शक्तिजश्च पराशरः ॥

ध्रुवमेकाक्षरं ब्रह्म ह्योमित्येव व्यवस्थितम् ।
बृहत्त्वाद्बृंहणत्वाच्च तद् ब्रह्मेत्यभिधीयते ॥
प्रणवावस्थितं नित्यं भूर्भुवस्स्वरितीर्यते ।
वेदत्रयस्वरूपं च यत्तस्मै ब्रह्मणे नमः ॥
सांख्यज्ञानवतां निष्ठा गतिः शमदमात्मनाम् ।
यत्तदव्यक्तममृतं प्रवृत्ति ब्रह्म शाश्वतम् ॥
प्रधानमात्मयोनिश्च गुहावासं च कथ्यते ।
अविभक्तं विभक्तं च यच्च वै शुद्धमक्षरम् ॥
परमं ब्रह्मणे तस्मै नित्यमेव नमो नमः ।
यद्रूपं वासुदेवस्य परमात्मस्वरूपिणः ॥
त्रित्वैकत्वस्वरूपं च संसेव्यं सांख्ययोगिभिः ।
तस्मै सर्वस्वभावाय कारणाय नमो नमः ॥
जगतः प्रळयोत्पत्त्योर्यत्तत्कारणसंज्ञितम् ।
महतः परमं गुह्यं तस्मै सुब्रह्मणे नमः ॥
समष्टिव्यष्टिभावं च भगवच्छब्दशब्दितम् ।
सर्वेभ्यश्चैव धर्मेभ्यः परं शुद्धं सनातनम् ॥
शरणं सर्वभूतानां पवित्रं परमामृतम् ।
स्वरूपं ब्रह्मणो यच्च तस्मै नित्यं नमो नमः ॥
इत्यतो भगवद्रूपमुपास्यं सांख्ययोगिभिः ।
भवेदिति च सिद्धान्तो महर्षिभिरिहोच्यते ॥

इत्थं वै भगवद्गीतानाम स्यादभिवर्णितम् ।
मनुना हि कुमारेण शङ्कराय महात्मने ॥
ययोक्तं स्यात्षडङ्गं च समीकरणपञ्चकम् ।
सा भवेद्भगवद्गीता चेति संस्तूयते च सा ॥
समीकृतप्रवृत्तीनां त्यागसन्न्यासिनां पुनः ।
समीकृतनिवृत्तीनां योगिनां चाधिकारिणाम् ॥
निष्ठा हि शिक्षिता धर्मलक्षणा चानया भवेत् ।
भगवद्गीतया चातः सा प्रशस्तेति गीयते ॥
प्रवृत्तिश्च निवृत्तिश्च यैश्च स्यात्सुसमीकृता ।
ते च वै सनकाद्याश्च जनकाद्याश्च योगिनः ॥
त्याज्योपादेयरूपाणि ज्ञानादीनि च यैः पुनः ।
समीकृतानि धर्मेण मुमुक्षुत्वस्य सिद्धये ॥
ते भवेयुर्वसिष्ठाद्याः केवला ज्ञानयोगिनः ।
इति सर्वदर्शनैश्च बुध्यते मुनिसत्तम ॥
तस्माद्भगवती गीता ब्रह्मसंसारलक्षणम् ।
धर्मं शास्तीति तस्यास्तु नाम्ना चैव हि बुध्यते ॥
इत्थं हि मनुना चैव प्रोक्तोऽस्त्यर्थः स्वयंभुवा ।
भगवद्गीताशब्दस्य स च वेद्यो मनीषिभिः ॥
प्राणिनां चैव सर्वेषां सक्रमौ चैव शाश्वतौ ।
उपक्रमोपसंहारौ भवेतां व्यवसायिनौ ॥

तयोः स्वरूपं साङ्गं च व्याख्यातं च यया भवेत् ।
सा भवेद्भगवद्गीता चेति तन्नाम कीर्तितम् ॥
इति चान्ये योगिनश्च तस्यार्थं चेत्थमेव हि ।
ब्रह्मणो व्यष्टिधर्माश्च तयः साङ्गाश्च सक्रमाः ॥
तथा समष्टिधर्माश्च व्याख्याताः स्युर्यया पुनः ।
सा विद्या भगवद्गीताशब्दवाच्या भवेदिति ॥
कथ्यते हि ततः सेयं वेद्या स्यादधिकारिभिः ।
तस्माद्धि शुद्धधर्मश्च भगवद्गीतयोच्यते ॥"

इत्यादिभिश्च भगवद्गीताशब्दरहस्यार्थश्च व्याख्यातो भवति । अत्र हि योगब्रह्मविद्यावाचकस्य च भगवद्गीताशब्दस्य—चेतनाचेतनतद्धर्मशिक्षायाः सनातनशुद्धयोगब्रह्मतद्धर्मशिक्षायाश्च बोधकत्वम्, शुद्धसांख्ययोगधर्मप्रवचनपरत्वम्, त्रिविधब्रह्मतत्त्वानुरूपधर्मशिक्षकत्वम्, ब्रह्मस्वरूपस्य चात्मनः स्थितित्रयस्य च निरूपकत्वम्, धर्मक्षेत्रकुरुक्षेत्रशुद्धक्षेत्रनियतनित्यव्यवसायस्वभावस्वरूपक्रमव्याख्यानपरत्वम्, अविद्याविद्यास्वभावस्वरूपाभिधायकत्वम्, साधिकारं सक्रमं च सर्गविसर्गस्वरूपलक्षणत्वम्, भगवच्छब्दनिर्दिष्टमहाधिकार्युपदिष्टविधानस्वरूपत्वम्, तद्भगवच्छब्दमुख्यवृत्त्यभिष्टुतब्रह्मस्वभावस्वरूपविज्ञानशिक्षकविद्यास्वरूपत्वम्, तथा समीकरणपञ्चकोपदेष्टृत्वम्, सर्वेषां च देहिनां स्वनियतानुष्ठेयव्यवसायोपक्रमोपसंहारस्वभावस्वरूपबोधकत्वम्, तद्ब्रह्मव्यष्टिसमष्टिस्वरूपसिद्धधर्मप्रवचनपरत्वम्', इति च सर्वं हि शब्दशक्त्यैव वाच्यत्वेन चाभिहितं

भवतीति विज्ञायते। सर्वं चैतदभिवर्णितं हि तद्ब्रह्मव्यष्टिसमष्टिस्वभावस्वरूपसिद्धधर्मस्वरूपमेव, इति सिद्धान्तः। अत्र हि यदपि पुनः समीकरणपञ्चकं च व्याख्यातम्, तस्य स्वरूपं पुनरित्थं विज्ञायते—'त्याज्योपादेयविज्ञानसमीकरणम्, त्याज्योपादेयसङ्कल्पसमीकरणम्, त्याज्योपादेयकर्मसमीकरणम्, तदात्मप्रवृत्तिस्वभावस्वरूपसमीकरणम्, तदात्मनिवृत्तिस्वभावस्वरूपसमीकरणम्' इति। क्षेत्रे च पुनस्तत्क्षेत्रज्ञाधिष्ठिते 'तत्क्षेत्रदृष्ट्यैव तत्त्याज्योपादेयत्वं च विज्ञानस्य भवति सर्वत्र' इति निश्चयात्, क्षेत्रज्ञदृष्ट्या तत्त्याज्योपादेयाविशेषणासंभवाद्विज्ञानस्य, देहिनां हि यथावस्थं तद्विज्ञानस्य पर्यायेण संभवात्, तज्ज्ञानकार्यफलस्याविशेषेण सर्वैरपि नियमेनानुभाव्यत्वाच्च शुद्धसांख्यैस्तदभिवर्णितत्याज्योपादेयविज्ञानसमीकरणं हि प्रथमं संवेद्यत्वेन चाभ्युपगतं भवति। त्याज्योपादेयविज्ञानमात्रं हि केवलसांख्यानामिति सिद्धान्तः। "यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति" इत्यादिश्रुत्याभिवर्णितं यच्च पुनः सर्वमूलसनातनब्रह्मस्वरूपविज्ञानम्, तदेव हि भवति समविज्ञानम्। तदेव हि भवति परस्थानयानमिति च सिद्धान्तः। अत एव भगवता प्रथमषट्कान्ते च "वेदेषु यज्ञेषु तपस्सु चैव" इत्यादिना तदभिवर्णितविज्ञानस्यैव सर्वोत्तमत्वं सर्वाभ्युदयकारणत्वं परप्रापकत्वं च प्रथममधिकारिभिः संवेद्यत्वेन समुपदिष्टं भवति। अतश्चैव भगवता तदिदं हि विशेषेण शिक्षाध्याये "ध्यायतो विषयान्पुंसः" इत्यारभ्य, "बुद्धिः पर्यवतिष्ठति'- इत्यन्तैश्श्लो-

पदेशैर्व्याख्यातं भवति, इति विज्ञायते। तथा च 'इदं च नाम निन्द्यम्, इदं च पुनरनिन्द्यम्' इत्याकारकं यच्च विज्ञानम्, तस्य समीकरणं हि "सर्वमावश्यकम्" इत्याकारकं समविज्ञानमेव भवति, इति भावः। ततश्चैवं समीकृतविज्ञानश्चाधिकारी च विशुद्धः स्वस्वरूपानुरूपसंसारव्यवसायं च तदभिवर्णितस्वविज्ञानेन यथास्वस्वरूपं हि परिसमाप्यैव व्रजति च परं पदम्, नास्य कुत्सितमकुत्सितं विज्ञानं स्वार्थदोषमूलं विषयावगाहि च प्रवर्तते, इति सिद्धान्तः। अतश्च पञ्चसु समीकरणेषु त्याज्योपादेयविज्ञानसमीकरणस्यैव प्राथम्यं हि सिद्धं भवति, इति च विज्ञायते। अथैवमेव भवति त्याज्योपादेयसङ्कल्पसमीकरणं नाम च द्वितीयम्। 'इदं च मे प्रियं काम्यं च भवतु, इदं चाप्रियमकाम्यं मे मास्तु' इत्याकारकः सङ्कल्पश्च सविज्ञानं यो भवति, तस्य समीकरणमेव "'सर्वं चापि मे प्रियं काम्यं च भवतु' इत्याकारकं तत्तत्सङ्कल्पसमीकरणं भवति। तदिदं हि शुद्धसांख्यैश्च द्वितीयत्वेन संवेद्यतयाभ्युपगतं भवति। त्याज्योपादेयसङ्कल्पस्य हि समीकरणं तु तत्क्षेत्रस्य दृष्ट्यैवेति निश्चयः। त्याज्योपादेयसङ्कल्पमात्रं तु भवति केवलसांख्यानामिति च सिद्धान्तः। अतश्च भगवता "प्रकाशं च प्रवृत्तिं च" इत्यारभ्य "अभ्यासयोगयुक्तेन" इत्यन्तैः षड्भिश्च ब्रह्मविभूतिगीतोपदेशैः सोऽयं समसङ्कल्पश्च प्रतिपादित इति विज्ञायते। किं चैवमसमसङ्कल्पानां समसङ्कल्पानां चाधिकारिणां लक्षणं तद्व्यवसायफलं च भग-

वतैवेत्थं स्वरूपगीतायाम् "त्रिविधं नरकस्येदम्" इत्यारभ्य एतैर्विमुक्तः कौन्तेय" इत्यन्ताभ्यां द्वाभ्यां चोपदेशाभ्यां व्याख्यातं भवति, इति विज्ञायते। ततश्च तदुपपादितसङ्कल्पसमीकरणमेव द्वितीयसङ्कल्पव्यवसायिनामारुरुक्षूणामारूढानां च सशक्तिकशुद्धात्मस्वरूपब्रह्मविभूतिसामीप्यकैवल्यप्राप्तिकारणं भवति। समसङ्कल्पश्चाधिकारी विशुद्धः स्वानुरूपसंसारव्यवसायं च यथाकालं यथादेशं च तदभिवर्णितसमसङ्कल्पेन कुर्वन्नेव प्राप्नोति ब्रह्मविभूतिम्। नास्य जुगुप्सितमजुगुप्सितं च काम्यं भूतिलक्षणं स्वार्थदोषमूलं कामेच्छाद्यवगाहि च प्रवर्तत इति शुद्धार्यसिद्धान्तः। ततश्च समीकरणेषु पञ्चसु त्याज्योपादेयसङ्कल्पसमीकरणं च भवति द्वितीयमिति विज्ञायते। ततश्च भवति तृतीयं त्याज्योपादेयकर्मसमीकरणम्। 'इदं च मया कार्यं करोमि, इदं च न करोमि पुनर्मया न कार्यम्' इति स्वरूपं सविज्ञानं च यत्कर्म भवति, तस्य समीकरणमेव 'सर्वं च कर्तव्यं मया कार्यम्' इत्याकारकं हि त्याज्योपादेयकर्मसमीकरणं भवति। तदिदं शुद्धसांख्यैश्च तृतीयत्वेन चाभ्युपगतं भवति। तत्त्याज्योपादेयकर्मसमीकरणं तु तत्क्षेत्रस्य दृष्टचैवेति निश्चयः। त्याज्योपादेयकर्ममात्रं तु केवलसांख्यानां भवतीति च सिद्धान्तः। अतश्च भगवता "इन्द्रियस्येन्द्रियस्यार्थे" इत्यारभ्य "तस्मात्त्वमिन्द्रियाण्यादौ" इत्यन्तैः षड्भिः सन्न्यासगीतोपदेशैश्च त्याज्योपादेयकर्मसमीकरणं हि संन्यासत्यागकार्यं च व्याख्यातं भवतीति विज्ञायते। किं

चैवं समकर्मणामसमकर्मणां चाधिकारिणां लक्षणं तत्कर्तव्यकर्मव्यवसायप्रकारः फलं च राजविद्यागीतायां भगवता चेत्थम् "लभन्ते ब्रह्मनिर्वाणम्" इत्यारभ्य "भोक्तारं यज्ञतपसाम्" इत्यन्तैरुपदेशैश्च व्याख्यातं भवतीति विज्ञायते। ततश्च तदुपपादितसमकर्मा शुद्धश्चाधिकारी स्वरूपानुरूपसंसारव्यवसायं हि यथाकालं यथादेशं कुर्वन्नेव संन्यासत्यागशुद्धश्च प्राप्नोति विजयलक्षणं स्थानं चानवद्यम्। न तस्य कार्यमकार्यं च कर्म भवति स्वार्थदोषमूलम्। तस्य हि सर्वं कार्यं भवति, इति शुद्धार्यसिद्धान्तः। ततश्च पञ्चसु समीकरणेषु त्याज्योपादेयकर्मसमीकरणं च भवति तृतीयम्, इति विज्ञायते। ततस्तुरीयं भवत्यात्मस्वभावस्वरूपप्रवृत्तिसमीकरणम्। इदं च पुनः 'नात्मनो भवतः पुण्यपापे, नायमात्मा बद्धश्च ज्ञानभक्तिकर्मभिः परतन्त्रो भवति, नायमात्माबद्धो ज्ञानादिभिः स्वतन्त्रश्च भवति', इत्याकारकं भवति। अतश्च भगवता योगवता योगगीतायाम् "मन्मना भव मद्भक्त" इत्यारभ्य "सर्वधर्मान्परित्यज्य" इत्यन्तैः षड्भिश्चोपदेशैस्तदात्मप्रवृत्तिस्वभावस्वरूपसमीकरणं तत्फलं च विज्ञेयत्वेन व्याख्यातं भवति। ततो भवति पञ्चमं तदात्मनिवृत्तिस्वभावस्वरूपसमीकरणम्। तच्च पुनः 'सोऽयमात्मा, सर्वमावश्यकं, सर्वं ब्रह्मस्वभावजं, सर्वं तत्खल्विदं ब्रह्म' इत्याकारकं भवति। तदिदं चापि तदुपपादितयोगगीतावचनैरेव भगवता प्रतिपादितम्। तत्फलं च विज्ञेयत्वेन व्याख्यातं भवतीत्यप्यत्र विज्ञायते। तदेतेषु पञ्चसु समीकरणेषु त्रि-

भिश्च पुनः 'सर्वं तत्खल्विदं ब्रह्म, सर्वमावश्यकम्' इति विज्ञानं च स्वार्थदोषनिवर्तकं हि संशिक्षितं भवति । शिष्टाभ्यां द्वाभ्यां च समीकरणाभ्यां 'सर्वं ब्रह्मस्वभावजम्' इति शुद्धयोगविज्ञानं च भवत्यनुशिक्षितम् । अतश्च 'शुद्धसांख्यपरं हि भवति प्रथमं समीकरणत्रयम् शुद्धयोगपरं हि भवत्यपरं च समीकरणद्वयम् इत्युच्यते । ततस्तदुपपादितज्ञानादिसमीकरणोपेतं च तदात्मप्रवृत्तिनिवृत्तिस्वभावस्वरूपसमीकरणं हि योगब्रह्मविद्याधिकारिभिश्च विज्ञेयमिति सिद्धान्तः । किं च तदेतेषां पञ्चानां च समीकरणानां हि प्रत्येकं समीकरणानि षट् संभवन्ति । ततस्त्याज्योपादेयविज्ञानसमीकरणं च प्रथमं हि 'स्वनियतसंसारेश्वरवस्तुसमीकरणम्, तद्वस्त्ववतारस्वरूपधर्मसमीकरणम्, त्याज्योपादेयविज्ञानधर्मनियामकाधिकारसमीकरणम्, तदुपपादिताधिकारानुरूपशिक्षाधर्मसमीकरणम, तच्छिक्षाधर्मसिद्धव्यवसायसामान्यविशेषकारणपदार्थसमीकरणम्' स्वनियतसंसारव्यवसायफलसमीकरणम् इति षड्विधं हि संदृश्यते । अत एव च भगवता "मया सर्वमिदं व्याप्तम्" इत्यादिना नरनारायणधर्मगीतोपदेशेन स्वनियतसंसारेश्वरवस्तुसमीकरणम्, "समोऽहं सर्वभूतेषु" इत्यादिना चावतारगीतोपदेशेन तद्वस्त्ववतारस्वरूपधर्मसमीकरणम्, "अहं सर्वस्य प्रभव" इत्यादिना चाधिकारगीतोपदेशेन त्याज्योपादेयविज्ञानधर्मनियामकाधिकारसमीकरणम्, "मय्यासक्तमनाः पार्थ" इत्यादिना शिक्षागीतोपदेशेन च तदुपपादिताधिकारानुरूपशिक्षाधर्म-

समीकरणम्, "नान्यं गुणेभ्यः कर्तारम्" इत्यादिना च कारणगीतोपदेशेन तच्छिक्षाधर्मसिद्धव्यवसायसामान्यविशेषकारणपदार्थसमीकरणम्, "समं सर्वेषु भूतेषु" इत्यादिकैवल्यगीतोपदेशेन स्वनियतसंसारव्यवसायफलसमीकरणम्, इति त्याज्योपादेयविज्ञानसमीकरणाङ्गानि च षट् समीकरणानि व्याख्यातानि भवन्ति, इति विज्ञायते। त्याज्योपादेयसङ्कल्पसमीकरणं च द्वितीयं हि—'स्वात्मस्वरूपविज्ञानानुरूपसञ्जातस्वरूपसमीकरणम्, स्वरूपानुरूपसाधनसमीकरणम्, तत्स्वरूपानुरूपसंसारव्यवसायनायिकाशक्तिसमीकरणम्, तत्संसारव्यवसायपूर्तिनियतमोक्षसमीकरणम्, तन्मुमुक्षुध्येयात्मस्वरूपब्रह्मवस्तुसमीकरणम्, स्वात्मस्वरूपविज्ञानानुरूपसङ्कल्पव्यवसायफलसमीकरणम्' इति समीकरणषट्कोपेतं च भवति। अत एव भगवता "त्रिविधं नरकस्येदम्" इत्यादिस्वरूपगीतावचनेन स्वात्मस्वरूपविज्ञानानुरूपसञ्जातस्वरूपसमीकरणम्, "तस्मादोमित्युदाहृत्य" इत्यादिसाधनत्रयगीतावचनेन स्वरूपानुरूपसाधनसमीकरणम्, "मां च योऽव्यभिचारेण" इत्यादिमायागीतावचनेन तद्व्यवसायनायिकाशक्तिसमीकरणम्, "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्" इत्यादिमोक्षगीतावचनेन तदभिवर्णितमोक्षसमीकरणम्, "अथ वा बहुनैतेन" इत्यादिब्रह्मस्वरूपगीतावचनेन तदभिवर्णितात्मस्वरूपब्रह्मवस्तुसमीकरणम्, "अभ्यासयोगयुक्तेन" इत्यादिब्रह्मविभूतिगीतावचनेन तदभिवर्णितसङ्कल्पव्यवसायफलसमीकरणम्, इति त्याज्योपादेयसङ्कल्पसमीकरणाङ्गानि षट् च समी-

करणानि व्याख्यातानि भवन्ति, इति विज्ञायते । एवं त्याज्योपादेयकर्मसमीकरणं च तृतीयम् सर्वभावसमीकरणम्, सर्वभाववस्तुसमीकरणम्, तत्सर्वभावोपहितकर्मव्यवसायनायकवस्तुसमीकरणम्, तत्सर्वभावोपहितकर्माधिकारसमीकरणम्, तत्सर्वभावोपहितकर्माधिकारिसमीकरणम्, तदभिवर्णितकर्माधिकारिप्राप्यफलसमीकरणम्,' इति समीकरणषट्कोपेतं च भवतीति विज्ञायते। अत एव हि भगवता "योगिनामपि सर्वेषाम्" इत्यादिप्राणायामगीतोपदेशेन सर्वभावसमीकरणं, "मयि सर्वाणि कर्माणि" इत्यादिपरमात्मगीतोपदेशेन सर्वभाववस्तुसमीकरणम्', "अक्षरं ब्रह्म परमम्" इत्यादिनाक्षरगीतोपदेशेन तत्कर्मव्यवसायनायकवस्तुसमीकरणम्, "भोक्तारं यज्ञतपसाम्" इत्यादिराजविद्यागीतोपदेशेन 'तदभिवर्णितकर्माधिकारसमीकरणम्,' "विहाय कामान्यः सर्वान्" इत्यादिपरमहंसगीतोपदेशेन 'तदभिवर्णितकर्माधिकारिसमीकरणम्, "तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ" इत्यादिसंन्यासगीतावचनेन तदभिवर्णितकर्माधिकारिप्राप्यफलसमीकरणम्', इति त्याज्योपादेयकर्मसमीकरणाङ्गानि षट् च भवन्ति व्याख्यातानि, इति विज्ञायते । ततस्तुरीयं पञ्चमं च यत्समीकरणम्, तदुभयोरपि योगव्यवसायनियतत्वादेकत्वमवगम्यते । अतस्तदुभयोरप्यङ्गानि च सर्वात्मसमीकरणम्, तदात्माधिष्ठानप्रकृतिसमीकरणम्, सर्वाधिकारिलक्षणतत्प्रकृत्युपहितसर्वकर्मसमीकरणम्, तदभिवर्णितकर्मसाधनसर्वभ-

क्तिसमीकरणम्, परप्राप्तिकारणशुद्धात्मस्वरूपब्रह्मविषयकसर्ववि-ज्ञानसमीकरणम्, तदात्मप्रवृत्तिनिवृत्तिस्वभावस्वरूपविज्ञानफल-समीकरणम्, इति षट् संभवन्ति। अत एव हि भगवता तदात्म-प्रवृत्तिनिवृत्तिस्वभावस्वरूपसमीकरणाङ्गानि षट् चेत्थं पुनः—"तद्बुद्धयस्तदात्मानः" इत्याद्यात्मगीतोपदेशेन सर्वात्मसमीक-रणम्, "क्षेत्रक्षेत्रज्ञयोरेवम्" इत्यादिप्रकृतिगीतोपदेशेत तदात्मा-धिष्ठानप्रकृतिसमीकरणम्, "निराशीर्यतचित्तात्मा" इत्यादि-कर्मगीतोपदेशेन सर्वाधिकारिलक्षणतत्प्रकृत्युपहितसर्वकर्मसमीकर-णम्, "मन्मना भव मद्भक्तः" इत्यादिभक्तिगीतोपदेशेन तदभिवर्णि-तकर्मसाधनसर्वभक्तिसमीकरणम्, "सुहृन्मित्रार्युदासीनमध्यस्थद्वे-ष्यबन्धुषु" इत्यादिज्ञानगीतोपदेशेन परप्राप्तिकारणशुद्धात्मस्वरूप-ब्रह्मविषयकसर्वविज्ञानसमीकरणम् "सर्वधर्मान्परित्यज्न्य" इत्या-दियोगगीतोपदेशेन तदात्मप्रवृत्तिनिवृत्तिस्वभावस्वरूपविज्ञानफल-समीकरणम्, इति च व्याख्यातानि भवन्तीति विज्ञायते। अत्र हि षट्सु समीकरणेषु योगसिद्ध इति प्रथमं विशेषणं देयमिति विज्ञेयम्। ततश्चैवमभिवर्णितं षडङ्गं च समीकरणपञ्चकं यस्यां च प्रतिपाद्यते, सा भगवद्गीता भवति, इति शुद्धार्यसिद्धान्तः। अत एव समीकरणपञ्चकार्थश्चेत्थं सनातनधर्मदीपिकायाम्—

"समीकरणपञ्चकं यत्तदित्थं हि सूरिभिः।
व्याख्यातं तच्च विज्ञेयं शुद्धयोगाधिकारिभिः॥

ज्ञानं भवति सर्वेषां तत्परप्राप्तये पुनः ।
परमं कारणं चेति सर्वश्रुतिभिरुच्यते ॥
अत्र तत्त्वं हि वक्ष्यामि शृणुष्व मुनिपुङ्गव ।
ये तु केवलसांख्याश्च ज्ञानभक्तिक्रियापराः ॥
तेषां च धर्मकामार्थमोक्षाश्चत्वार एव हि ।
पुरुषार्था भवन्तीति विज्ञेयं चाधिकारिभिः ॥
तत्र धर्मो ज्ञानरूपश्चार्थकामौ स्वभावतः ।
भक्तिरूपौ च भवतः संन्यासो मोक्षलक्षणः ॥
ततो ज्ञानं च भक्तिश्च ब्रह्मभूतिप्रदायिनी ।
संन्यासश्चेति सांख्यानां फलं स्यादिति गीयते ॥
तस्मात्केवलसांख्याश्च ज्ञानिनो ज्ञानलक्षणाः ।
तथा भक्ता भक्तिलिङ्गाः कर्मठाः कर्मलक्षणाः ॥
भवेयुरिति सिद्धान्तो विज्ञेयो धर्मकोविदैः ।
किं चेत्थमपि तत्र स्याद्विज्ञेयं मुनिपुङ्गव ॥
ज्ञानस्य कैश्चित्प्राधान्यं कथ्यते ज्ञानिभिः पुनः ।
भक्तेर्भक्तैश्च मुख्यत्वं कथ्यते च तथैव हि ॥
प्राधान्यं कर्मणश्चैव कर्मठैश्च निगद्यते ।
सर्वे चैतेऽपि विमुखा ब्रह्मणः पदवेदनात् ॥
अप्राप्य ब्रह्मनिर्वाणं पुनरावृत्तिवर्जितम् ।
प्रधानपरतन्त्राश्च जीवलक्षणलक्षिताः ॥

त्रिविधे चैव संसारे भ्रमन्त्येव पुनः पुनः ।
अतस्ते चैव सर्वेऽपि बद्धाः स्युरिति निर्णयः ॥
इति तस्माच्च सांख्यानां व्यवसायस्य कारणम् ।
यच्च ज्ञानं न तच्च स्यात्परप्राप्तेश्च कारणम् ॥
ततः केवलसांख्यानां व्यवसायेषु च त्रिषु ।
आत्मनश्च यथाधर्मं प्रवृत्तिश्च प्रकाशते ॥
निवृत्तिश्चैव तस्माद्धि सोऽयमात्मा सनातनः ।
प्रवृत्त्या च निवृत्त्या च बद्धः स्यादिति निर्णयः ॥
ततस्तेषां हि सांख्यानां तत्परप्राप्तये पुनः ।
भगवच्छिक्षितं च स्यात्समीकरणपञ्चकम् ॥
तत्समीकरणं युक्तं यच्च ज्ञानं तदात्मनः ।
या च भक्तिश्च यत्कर्म सर्वाण्येतानि धर्मतः ॥
तत्परप्राप्तये चैव सांख्यानां मुनिपुङ्गव ।
कारणानि भवन्तीति सिद्धान्तः सांख्यसंमतः ॥
त्रिमुखाश्चैव संसारव्यवसायाश्च सक्रमाः ।
भवन्त्येकमुखाश्चैव शिक्षया चानया पुनः ॥
समीकृतज्ञानभक्तिकर्मनिष्ठाश्च ये पुनः ।
सांख्यास्ते चैव सर्वेऽपि मुक्ताश्चैव यथाक्रमम् ॥
तत्परप्राप्तये चैव कारणं योगलक्षणम् ।
विशुद्धं चैव विज्ञानं लभन्ते चेति निर्णयः ॥

तत्समीकरणेष्वेवं पञ्चसु त्रीणि सन्ति हि ।
विहितानि च सांख्यानां शुद्धानामिति निर्णयः ॥
द्वे समीकरणे चैव योगिनां विहिते तथा ।
भवेतामिति सिद्धान्तः पूर्वाचार्यैरिहोदितः ॥
समीकृतस्वसंसारव्यवसायाश्च ये पुनः ।
तेषां हि ब्रह्मसामीप्यं कीर्तितं स्यान्महात्मभिः ॥
इत्थं महर्षयः केचिद्वदन्ति मुनिपुङ्गव ।
यत्समीकरणं चोक्तं तद्भवेत्त्रिविधं यथा ॥
प्रवृत्तात्मस्वरूपस्य यत्तद्धि प्रथमं भवेत् ।
निवृत्तात्मस्वरूपस्य यत्समीकरणं च तत् ॥
द्वितीयमिति विज्ञेयं शुद्धस्यैवात्मनस्तथा ।
यत्समीकरणं तद्धि तृतीयं चेति कथ्यते ॥
आद्ये द्वे चैव सांख्यानां शुद्धानां विहिते तथा ।
तृतीयं तच्च शुद्धानां योगिनां चेति निर्णयः ॥
इति तस्मादिदं वेद्यं समीकरणपञ्चकम् ।
समीकरणत्रयं च वेद्यं स्यादधिकारिभिः ॥
समीकरणत्रयं च समीकरणपञ्चकम् ।
एतद्द्वयं च प्रत्येकं षडङ्गं स्यादितीर्यते ॥
षण्णां चैव तदङ्गानां स्वरूपं च विशेषतः ।
महर्षिभिरनेकैश्च व्याख्यातं स्यात्सयुक्तिकम् ॥"

इति, व्याख्यातो भवति भगवद्गीताशब्दार्थश्च भगवता नारदेन। एवं तेनैवानुपदं हि तेषां च षण्णां समीकरणानामङ्गभूतानामपि स्वरूपं व्याख्यातं भवति। इत्थं हि महर्षिराङ्गिरसश्च "यस्याः पुनरध्ययनेन हि समष्टिव्यष्ट्यात्मकयोगब्रह्मस्वरूपविज्ञानम्, तत्समष्टिव्यष्ट्यनुगतधर्मविज्ञानम्, तद्धर्माविकारिस्वरूपविज्ञानम्, सर्वं ब्रह्मस्वभावजं, सर्वमावश्यकं, सर्वं तत्खल्विदं ब्रह्म, इति विज्ञानं च तत्तदधिकारिसमधिगम्यप्रयोजनरूपं हि सञ्जायते, सा भगवद्गीता भवति" इति भगवद्गीताशब्दार्थं च व्याख्याति। एवम्—

"धर्म उवाच—का वा विद्या तु विद्यानां सेविता भवतोत्तमा।
यस्यां हि सर्वे धर्माश्च निहिता ब्रह्मसंमिता॥
दक्ष उवाच—"सा वै भगवती विद्या मया स्यात्सेविता विभो।
यया व्यष्टिसमष्टिस्वरूपं ब्रह्माभिवर्णितम्॥"

इति, भार्गवमहाभारते च धर्मदक्षसंवादे तद्भगवद्गीताशब्दार्थश्च व्याख्यात इति विज्ञायते। किं च " इत्थं हि विज्ञायते भगवद्गीताशब्दार्थः—तयैव हि ब्रह्म शुद्धं व्यवसायिभिः समुपास्यत्वेनाभिधीयते, या हि त्रयी चतुर्थी च भवति महाविद्या भगवतीनाम्नी ब्रह्मसंसारव्याख्यानपरा। इयमेव हि योगब्रह्मविद्येति गीयते। तामिमां हि यथायुगं भगवान्वासुदेवः प्रथमसङ्कल्पसूत्रनायकश्च स्वावतारप्रभावाभिज्ञैरधिकारपुरुषैर्लोके च धर्मसेतवे प्रावर्तयत्" इति वासिष्ठैराचार्यैस्तद्भगवद्गीताशब्दो व्याख्यातो

भवति । अत एव "सैषा भगवती विद्या यस्यां वै संसारपरं ब्रह्मस्वरूपं शुद्धं पूज्यं च संप्रतिष्ठितं भवति । तामिमां यो वेद सोऽमृतो भवति" इति "श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति "धर्मावहं पापनुदं भगेशम्" इत्यादिश्रुतिभ्यश्च योगब्रह्मविद्या च भगवतीशब्दार्थत्वेन विज्ञायते । अत्र 'भगवद्दृशेभ्यः' इत्यस्य भगवतीं विद्यां जानद्भ्यः, इत्यर्थश्चावगम्यते । एवं 'भगेशम्' इत्यनेन सांख्ययोगसिद्धव्यवसायनायकं ब्रह्मस्वरूपमात्माख्यं च वस्त्वभिधीयते । न च भगवता गीतत्वादस्या विद्यायाश्च भगवद्गीतेत्यभिधानं च भवति, यतश्च श्रीकृष्णो भगवानिति कथ्यत इति वाच्यम्; व्यासादिमहर्षीणां च पूज्यानां भगवच्छब्दविशेषणस्य दृष्टत्वात्तदुपदिष्टानामपि तथा कृष्णेन मार्कण्डेयविदुरोद्धवभीष्मधर्मसिद्धादिभ्यस्तथा चावतारान्तरेऽनसूयादिभ्यो गदितानामपि च भगवद्गीताभिधानप्रसक्तेः । न च श्रीकृष्णस्यैव भगवच्छब्दवाच्यत्वं च मुख्यवृत्त्या हि भवति नेतरेषामिति वाच्यम्, प्रमाणाभावात् । न च महाभारतादौ श्रीकृष्णस्यैव मुख्यवृत्त्या भगवच्छब्दवाच्यत्वं च प्रमाणसिद्धमिति वाच्यम्, तथाभिवर्णितकृष्णाच्च पार्थसारथेः कृष्णस्यास्य स्वरूपभेदस्य चोपलब्धेः । अत एवेत्थं महाभारते पार्थसारथेः कृष्णस्य नारायणस्वरूपसिद्धांशावतारस्वरूपसिद्धत्वं तदन्यकृष्णस्य भगवद्वासुदेवायत्ततन्नारायणतुल्यावतारस्वरूपत्वं च—

" कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्त्वतः॥" इति,
" कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥" इति,
" धर्मस्य कुलसन्ताने धर्मादेभिर्विवर्धितः ।
अहो ह्यनुगृहीतोऽद्य धर्म एभिः सुरैरिह ॥
नरनारायणाभ्यां च कृष्णेन हरिणा तथा ।
तत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे ॥
स्थितौ धर्मसुतावेतौ तथा तपसि धिष्ठितौ ।
एतौ हि परमं धाम कानयोराह्निकक्रिया ॥"

इति, विज्ञायते । किं च सत्यपि पार्थसारथेः कृष्णस्य मुख्यवृत्त्या भगवच्छब्दवाच्यत्वे, मार्कण्डेयादिभ्यस्तत्कृष्णोपदिष्टानां च तद्भगवद्गीताभिधानत्वप्रसक्तिदोषस्य तदवस्थत्वमेव । त इमे नरनारायणकृष्णहरयश्च चत्वारो लोकधर्मसंरक्षणधुरंधरा मद्भावसंज्ञकाश्च भवन्तीति महाभारतार्थविदां शुद्धार्याणां च सिद्धान्तः । किं च ये च पुनश्चत्वारो नरादयः प्रतिपादिताः, तेषामेव वासुदेवहस्तगतत्वम्, मुख्यवृत्त्या भगवच्छब्दवाच्यवासुदेवांशत्वम्, योगब्रह्मविद्योपदेष्टृत्वम्, एकरूपत्वम् कालनायकत्वम्, इत्यादिकं च सर्वं महाभारतादेवावगम्यते । अत्रेदमवधेयम्—यश्च पुनर्मद्भावेषु चतुर्षु चान्यतमः कृष्णः, स च स्वाधिकारायत्तैरधिकारिभिश्च धर्मं संरक्षयति, स चोत्तमः प्रथमश्च भवति । पार्थसारथिरयं कृष्णश्चा-

न्तिमः। स चोपचाराद्भगवानिति कथ्यते। स च भगवन्नारायणांशः, इति। अत एव हि देवीभागवते चेत्थम्—

"योगदेवी महाशक्तिर्योगशक्तिर्महेश्वरी।
ब्राह्मी ह्रींबीजवेद्या च सा चैकेति निगद्यते॥
पुनश्च त्रिमुखी चैव त्र्यक्षरी पूर्णलक्षणा।
पुंरूपा कृष्णसंज्ञा च पिङ्गलेति च गीयते॥
परा सैषा महाशक्तिः पुनश्चैकमुखी भवेत्।
सैषा चैकमुखी देवी श्रींबीजेति विभाव्यते॥
ततः कृष्णास्त्रयः सन्ति मुख्याः संसारनायकाः।
तत्र बालाकलः कृष्णो भवेदैंबीजलक्षणः॥
प्रथमश्च द्वितीयस्तु क्लींबीजस्वरलक्षणः।
तृतीयोऽमृतबीजश्च कृष्णः स्याद्धर्मनन्दनः॥
या स्यादेकमुखी देवी कृष्णाख्या सापि गीयते।
स च कृष्णश्च भगवान्शुद्धो योगेश्वरो भवेत्॥
एतेषां च चतुर्णां हि व्यवसाये नरेश्वर।
कृष्णाः षोडश जायन्ते व्यवसायस्य नायकाः॥"

इति, योगदेवीसङ्कल्पनायकाः कृष्णाश्च षोडश सन्तीति विज्ञायते। यद्यपि ब्रह्मविद्यास्वरूपेषु दर्शनेषु भगवच्छब्दश्च सामान्यतः सर्वेषां विशेषणत्वेन प्रतिपाद्यते, तथापि यथाधिकरणं तद्भगवच्छब्दार्थश्च विज्ञेय इति सिद्धान्तः। अतश्च अध्यात्मशब्दरत्नार्णवे भगवन्नन्दिकेश्वरविरचिते च "ब्रह्म, आत्मा, अक्षरम्, अव्यक्तं, प्रकृतिः,

स्वभावः, योगः, नारायणः, वासुदेवः, भगवान्, भगवती, माया, मोक्षः, अहम्, मां, बीजं, कारणं, अहंकारः, तत्, सत्, भावः, अभावः, ईश्वरः, संसारः, संन्यासः, त्यागः, ज्ञानम्, भक्तिः, कर्म, क्षेत्रम्, वृक्षः, क्षेत्रज्ञः, पुरुषः, सनातनः, शाश्वतः, अव्ययः, प्रधानम्, अध्यात्मम्, अधिभूतम्, अधिदैवम्, अधियज्ञम्, अधिलोकम, अधिज्यौतिषम्, अधिविद्यम्, अधिप्रजम्, विभूतिः, बुद्धिः, परमात्मा, इत्यादिशब्दानां यथाधिकरणमर्थभेदश्च सप्रमाणं विचारेण च विज्ञेयः" इत्यादिकं च प्रतिपादितं भवति। ततश्चाध्यात्मदर्शनादिषु प्रयुक्तानां विशिष्टशब्दानां च वाच्यार्थस्तु यथादर्शनमेव विज्ञेयः इति सिद्धान्तः। अत एव "भगवद्गीताख्या च सेयं योगब्रह्मविद्या यथादर्शनं यथाधिकरणं च तत्तद्दर्शनप्रवर्तकैर्महर्षिभिश्च व्याख्याता भवति। अतः सर्वेषु दर्शनेषु सेयमध्येयत्वेन संस्तूयते हि पूर्वाचार्यैः" इति प्राचीनार्याश्च वदन्ति। तस्मादेवं सप्रमाणं व्याख्यातो भगवद्गीताशब्दरहस्यार्थश्च श्रीभगवद्गीतार्थजिज्ञासुभिरधिकारिभिश्च प्रथममवश्यं विज्ञेयो भवति, इति सिद्धान्तः। तस्मादेवं श्रीभगवद्गीतार्थबुभुत्सुभिरधिकारिभिश्चप्रथमं विज्ञेयत्वेन प्रतिपादितेनानेनोपोद्घातप्रबन्धेन हि श्रीभगवद्गीतायाः—मध्येमहाभारतं चावतारप्रकारः, योगब्रह्मविद्यालक्षणं च स्वरूपम्, नरनारायणधर्मगीतादिचतुर्विंशतिगीतात्मकत्वम्, षड्विंशत्यध्यायंविभक्तत्वम्, पञ्चचत्वारिंशदधिकसप्तशतश्लोकगुम्भिततत्वम्, अनुबधिचतुष्टयस्वरूपम्, समग्रसंग्रहार्थः, भगवद्गीताश-

न्द्ररहस्यार्थः, इति च सर्वं यथाप्रज्ञं हि नारदाद्याचार्यसिद्धान्तानुसारेण व्याख्यातं भवति ।

## परिशिष्टविज्ञेयार्थनिरूपणम् ।

इत्थं हि योगब्रह्मविद्यास्वरूपां च तामिमां श्रीभगवद्गीतां पुनरधिकृत्य प्राचीनहंसा व्याचक्षते—तत्र च केचिदित्थं व्याचख्युः—"विदितसर्वधर्मरहस्योऽपि राजा धृतराष्ट्रः प्राकृतात्मीयतन्त्रपरतन्त्रः स्वार्थाग्रहदोषदुष्टश्च तत्स्वार्थाग्रहदोषनिवृत्तये स्वमनः-प्रसादाय च शुद्धसनातनधर्मतत्त्वजिज्ञासुः, 'कोऽसौ पुमान् स्वतन्त्रः परतन्त्रश्च भवति; इति सञ्जयं पृच्छति "धर्मक्षेत्रे कुरुक्षेत्रे" इत्यादिना । अथ च सञ्जयः स्वयोगबलेन योगब्रह्मविद्यास्वरूपां संपूर्णगायत्रीलक्षणां च श्रीभगवद्गीतां हि समुपदिदिक्षुः, तद्योगब्रह्मविद्यार्थावतारिकालक्षणां भगवच्छ्रीकृष्णानुगृहीतस्वनियतानुष्ठेयधर्मानुष्ठानप्रतिबन्धकस्वार्थाग्रहदोषनिवर्तकशुद्धसनातन-धर्मतत्त्वजिज्ञासुपार्थशरणागतिप्रकारव्याख्यानपरां स्वीकाराद्यङ्गत्रयोपेतां चाख्यायिकां हि "दृष्ट्वा तु पाण्डवानीकम्" इत्यारभ्य "एवमुक्त्वार्जुनः संख्ये" इत्यन्तेन च तस्मै धृतराष्ट्राय च राज्ञे व्याचख्यौ । ततश्च तस्मै स्वकार्पण्यदोषनिवृत्तये परप्राप्तिकारणविज्ञानाय च शरणागतार्जुनाय भगवता श्रीकृष्णेन समुपदिष्टां योगब्रह्मविद्यास्वरूपां च श्रीभगवद्गीताम् "तमुवाच हृषीकेशः" इत्यारभ्य "सर्वधर्मान्परित्यज्य" इत्यन्तेन समुपदिदेश । ततश्च पुनस्तस्मै च राज्ञे तत्पार्थाय तद्भगवदुपदिष्टम्, "भगवद्धर्मः, स्वधर्मः,

समात्मधर्मः, शिष्यधर्मः, परमाचार्यधर्मः, महाधर्मः, इति धर्मषट्कम्, ततश्चाधिकृताधिकारिधर्मम्, सर्वेषां चाधिकारिणां परप्राप्तिलिङ्गम्' इत्यादि सर्वं तद्योगब्रह्मविद्यानिगमनाङ्गभूतार्थं च "नाहं वेदैर्न तपसा" इत्यारभ्य "यत्र योगेश्वरः कृष्णः" इत्यन्तेन च व्याचख्यौ। एवं सञ्जयोपदिष्टश्रीभगवद्गीतार्थश्रवणेन, यथा च पार्थः श्रीभगवद्गीतार्थश्रवणेन लोकेश्वरभगवत्स्वरूपविज्ञानी विनष्टमोहः लब्धस्मृतिः विगतसन्देहः लोकेश्वरभगवन्नारायणनित्यशुद्धसत्यसङ्कल्पविज्ञानेन स्वनियतानुष्ठेयधर्मवेत्ता चाभवत्, तथैवायं राजा च धृतराष्ट्रः संबभूव। तथा च स्वतन्त्रस्वभावपुरुषलक्षणो धर्मश्च राज्ञा समवगतः, इति भावः। प्राकृतात्मीयभावाभिबद्धाश्च परतन्त्राः, सनातनशुद्धब्रह्मस्वभावाभिबद्धाश्च स्वतन्त्राः, इति हि विभाव्यते। या च पुनर्योगब्रह्मविद्या भगवतार्जुनाय समुपदिष्टा, सा च सांख्यकाण्डं योगकाण्डं चेति काण्डद्वयात्मिका भवति। पूर्वकाण्डे च सांख्यपरे ज्ञानभक्तिकर्मनिष्ठाश्च शुद्धाः कार्पण्यदोषनिवर्तकधर्मप्रवचनपरा व्याख्याताः। उत्तरकाण्डे च योगपरे परप्राप्त्युपायविज्ञानलक्षणा धर्माश्च प्रतिपादिताः। श्रीभगवद्गीतायाः प्रथमद्वितीयतृतीयषट्कैः सांख्यधर्माश्च शुद्धाः प्राकृतात्मीयभावोपहिताः प्रवृत्तिनिवृत्तिधर्मलक्षणाश्च व्याख्याताः, तुरीयषट्केन च योगधर्माः सनातनशुद्धब्रह्मस्वभावोपहिताः परप्राप्तिलक्षणाश्च व्याख्याताः। तदेवमुपपादितधर्मविज्ञानमेव परप्राप्त्युपायभूतस्वातन्त्र्यलक्षणमिति सिद्धान्तः" इति।

अन्ये तु "सेयं हि योगब्रह्मविद्या श्रीभगवद्गीताख्या शुद्धसांख्यत्वलक्षणा भवति। अस्याश्च षट्कैस्त्रिभिश्च पूर्वैः क्षेत्रज्ञस्यात्मनः प्रवृत्तिपरो व्यवसायः, तुरीयषट्केन निवृत्तिपरो व्यवसायश्च प्रतिपाद्यते। ततश्चेयं हि प्रवृत्तिनिवृत्तिपरव्यवसायस्वरूपव्याख्यानपरैवेति विज्ञायते" इति वदन्ति। अत्र प्रवृत्तिपरो व्यवसाय इत्यनेन गतिद्वयपरो व्यवसायः, निवृत्तिपरो व्यवसाय इत्यनेन शुद्धगतिको व्यवसायश्चाभिधीयत इति विवेकः। ततश्चान्ये तु हंसाः "सेयं योगब्रह्मविद्या परावरब्रह्मतत्त्वव्याख्यानपरा सांख्यविद्यास्वरूपा भवति। सेयं हि सांख्यविद्या भवति, यस्याश्च विज्ञानात्परमपरं च ब्रह्मतत्त्वं हि विज्ञायते" इति वदन्ति। अत्रापि चापरतत्त्वमित्यनेन गतिद्वयपरो व्यवसायश्च प्रवृत्तिपरः, परतत्त्वमित्यनेन शुद्धगतिको व्यवसायश्चावगम्यत एवेति विवेकः। किंच परतत्त्वमित्यनेन तदात्मनः क्षेत्रज्ञस्योपसंहारपरो व्यवसायः, अपरतत्त्वमित्यनेन चोपक्रमपरो व्यवसायश्च विज्ञायते, इति विवेकः। अथ एवेत्थम्—

"तामिमां भगवद्गीतां योगब्रह्मस्वरूपिणीम्।
गायत्रीलक्षणां चैव सर्वेषां चाधिकारिणाम्॥
व्यवसायस्य सिद्धस्य नियतस्य च धर्मतः।
व्याख्यात्रीं ब्रह्मसंसारस्वरूपार्थप्रकाशिकाम्॥
त्रित्वैकत्वं धर्मतत्त्वं वदन्तीं ब्रह्मसंमिताम्।
इत्थं हि नामधेयैश्च प्राचीनार्या वदन्ति हि॥

केचिच्च तत्र तां चेमां तत्तत्त्वत्रयवादिनीम् ।
परापरब्रह्मतत्त्वव्याख्यानपरलक्षणा ॥
सांख्यविद्येति नाम्ना हि वदन्ति स्वतपोबलात् ।
सनातनं ब्रह्मतत्त्वं परतत्त्वं तथैव हि ॥
आत्मीयं प्राकृतं तत्त्वमपरं चेति निर्णयः ।
तदपरतत्त्वसिद्धो व्यवसायश्च देहिनाम् ॥
गतिद्वयप्रवृत्त्या च युक्त एव विराजते ।
तथा परतत्त्वसिद्धव्यवसायो निवृत्तिगः ॥
शुद्धैकगतिकश्चैव योगसंसारलक्षणः ।
देहिनां चैव सर्वेषां भवेदित्येव निर्णयः ॥
प्रवृत्तिश्च निवृत्तिश्च सर्वेषां प्राणिनां पुनः ।
नियताऽपरतत्त्वेन भवेदिति च निर्णयः ॥
एवमेव हि योगश्च तत्परप्राप्तिलक्षणः ।
परतत्त्वधर्मसिद्धो भवेदिति निगद्यते ॥
इति तेषां च सांख्यं हि विज्ञेयं स्यान्मुमुक्षुभिः ।
दक्षिणा च गतिर्ज्ञानभक्तिकर्मोज्ज्वला भवेत् ॥
सर्वेषां देहिनां चैव नियता बन्धलक्षणा ।
तथा गतिश्चोत्तरा च ज्ञानभक्तिक्रियोज्ज्वला ॥
देहिनां चैव सर्वेषां नियता मुक्तिलक्षणा ।
एतद्गतिद्वयं चैव व्यवसायस्य कारणम् ॥

अपरब्रह्मतत्त्वज्ञधर्मसिद्धमितीर्यते ।
इदं गतिद्वयं चैव विद्या व्याख्याति चापरा ॥
एका शुद्धा गतिश्चैव शरणागतिसंज्ञिका ।
परा गतिरिति प्रोक्तं योगिभिः परविद्यया ॥
या च योगब्रह्मविद्या व्याख्याता ब्रह्मवादिनी ।
सा भवेत्सांख्यसंज्ञेति केश्चिदत्र निगद्यते ॥
इत्थं हि तेषां सिद्धान्तो विज्ञेयो मुनिपुङ्गव ।
विज्ञानाद्यस्य सर्वेऽपि ब्रह्म जानन्ति तत्त्वतः ॥
आत्मीयं प्राकृतं तत्त्वं ताभ्यां तत्त्वं परं च यत् ।
सनातनं ब्रह्मतत्त्वं सर्वश्रुतिनिरूपितम् ॥
सर्वं चैतद्येन सम्यग्यथार्थं हि विचार्यते ।
तदियत्तदियच्चेति तच्च साङ्ख्यमितीर्यते ॥
अव्यक्तादीनां तत्त्वानां चतुर्विंशतिसंख्यया ।
तदुपक्रमदृष्ट्या हि गणितानां च धर्मतः ॥
यश्चतुर्धा विभागः स्यात्स तत्त्वं प्राकृतं भवेत् ।
यथातत्त्वविभागं हि प्रतीतिर्यात्मनो भवेत् ॥
सा चात्मीयं भवेत्तत्त्वं द्वितीयं मुनिसत्तम ।
उपसंहारदृष्ट्या च प्रतीतिः स्यादियं पुनः ॥
शुद्धदृष्ट्या च यत्तत्त्वं समं चेति विभाव्यते ।
तद्वै सनातनं तत्त्वं ब्रह्मतत्त्वमितीर्यते ॥

उपक्रमोपसंहारदृष्टिर्यस्यां न विद्यते ।
सा समा चैव दृष्टिश्च शुद्धदृष्टिरितीर्यते ॥
तत्त्वान्येतानि च त्रीणि ह्यधिकृत्याधिकारिणः ।
त्रित्वैकत्वलक्षणं च धर्मं या शास्ति तत्त्वतः ॥
सा योगब्रह्मविद्येति सांख्यविद्येति गीयते ।
इत्यतः प्रथमं तस्या माहात्म्यं चावगम्यते ॥
इत्थं चापि भवेत्तस्या गीताया मुनिसत्तम ।
माहात्म्यं वर्ण्यते शुद्धैः सांख्यैश्च मुनिपुङ्गवैः ॥
आब्रह्ममानुषान्तं च स्थानं कर्मगुणावृतम् ।
त्रिभिः स्वभावैर्युक्तं स्यात्ते स्वभावाश्च तत्त्वतः ॥
प्राकृतात्मीयशुद्धाश्च भवन्तीति च निर्णयः ।
प्राकृतात्मीयभावाभ्यां ताभ्यां चैव विशेषतः ॥
प्रवृत्तिलक्षणश्चैवं निवृत्तिलक्षणस्तथा ।
धर्मो भवति योगीन्द्र व्यवसायस्य लक्षणम् ॥
एवं वै शुद्धभावेन धर्मश्च प्राप्तिलक्षणः ।
ब्राह्मः सनातनश्चैव जायते योगसंज्ञकः ॥
एवंस्वभावानेतांश्च ह्यधिकृत्याधिकारिणः ।
त्रित्वैकत्वलक्षणं च धर्मं या शास्ति तत्त्वतः ॥
सा योगब्रह्मविद्येति सांख्यविद्येति गीयते ।
इत्यतः स्याद्द्वितीयं च माहात्म्यं मुनिपुङ्गव ॥

ततः श्रीभगवद्गीताशास्त्रं च मनुलक्षणम् ।
सनातनमिदं चास्ति सांख्यविज्ञानलक्षणम् ॥
यच्च वै सांख्यविज्ञानं महाकैवल्यकारणम् ।
तच्च वै ज्ञानगीतायां भवेत्सममभिवर्णितम् ॥
यच्चोच्यते हि कर्तृत्वं प्रकृतेः श्रुतिभिः पुनः ।
तच्चाप्यात्मशक्तिमायापरं स्यादिति निर्णयः ॥
ततश्च सर्वतत्त्वानां प्राकृतानां महामते ।
त्रिभिर्गुणैः शक्तिजैश्च भवेद्भेदः सहस्रशः ॥
सति योगे त्वात्मना हि तेषां भावस्तथा भवेत् ।
अधिकृत्य च तं मूढास्त्वनात्मज्ञा विचेतसः ॥
ब्रह्मणः सूत्रशक्तिं च निकृन्तन्ति नराधमाः ।
कर्मभिर्भेदमूलैश्च स्वार्थग्रहविदूषितैः ॥
तस्मात्सांख्ये च शास्त्रेऽस्मिन्निखिलस्यैकत्वं सनातनम् ।
विचारपूर्वकं प्रोक्तं तत्त्वानां मुनिसत्तम ॥
सांख्ये च निहितं ज्ञानं परमं तत्त्वलक्षणम् ।
एवमन्यच्च विज्ञेयं सर्वं चास्ति मुमुक्षुभिः ॥
तस्मादेव महाविद्या सांख्यविद्या प्रशस्यते ।
अध्येया स्यादियं दासैर्लोककैङ्कर्यतत्परैः ॥
इदं सांख्यं सेश्वरं च तथा चैव निरीश्वरम् ।
शुद्धं चेति च भेदेन वर्णितं स्यादितीर्यते ॥

इति योगब्रह्मविद्या सांख्यविद्येति गीयते ।
तत्त्वतो योगसांख्याख्या सा भवेदिति निर्णयः ॥
तद्योगब्रह्मविद्यायाः परा विद्या न विद्यते ।
परप्राप्तिकारणं च देहिनां मुनिपुङ्गव ॥
तस्माद्योगब्रह्मविद्या परप्रेप्सुमुमुक्षुभिः ।
अध्येया स्याद्यथाशक्ति दीक्षितैर्नियतात्मभिः ॥
अव्यक्तं सर्वदेहेषु सूक्ष्ममव्ययमच्युतम् ।
उच्चावचफलालिप्तमापः पुष्करपर्णवत् ॥
संस्थितं नित्यमात्मानं स्वरूपाच्च स्वभावतः ।
अविज्ञाय च ये मर्त्या दर्शनज्ञा विशेषतः ॥
अध्यात्मदर्शनज्ञाश्च ब्रह्मतत्त्वं परं तथा ।
अपरं चाखिलान् लोकान् शासयन्तः समञ्जसम् ॥
ते स्युः श्रीभगवद्गीताध्ययने नाधिकारिणः ।
यतस्ते चैव सर्वेऽपि भवेयुश्चात्मघातिनः ॥
ये तु प्राकृतलिङ्गं च ब्रह्म मानसकर्मणा ।
उपासते भूतिकामा भक्ताश्चैवाधिकारिणः ॥
ते स्युः श्रीभगवद्गीताध्ययने नाधिकारिणः ।
यतस्तद्ब्रह्म तत्त्वेन ते न जानन्ति कामिनः ॥
ये केवलं कर्मतन्त्वपरा वेदविदो जनाः ।
कामात्मानः स्वर्गपरा लोभमोहमदान्विताः ॥

ते स्युः श्रीभगवद्गीताध्ययने नाधिकारिणः ।
यतश्चात्मस्वरूपं हि ते न जानन्ति तत्त्वतः ॥
ये त्वष्टाङ्गयोगपराश्चित्तवृत्तिनिरोधकाः ।
सांख्याः प्रकृतितन्त्राश्च तथा कारणवादिनः ॥
ते स्युः श्रीभगवद्गीताध्ययने नाधिकारिणः ।
यतश्चात्मशक्तिकार्यं ते न जनन्ति धर्मतः ॥
ये च वेदान्तिनोऽध्यात्मज्ञानिनो धर्मलक्षणाः ।
तुरीयाश्रमनिष्ठाश्च सर्वं ब्रह्मेति वादिनः ॥
ते स्युः श्रीभगवद्गीताध्ययने नाधिकारिणः ।
यतस्ते प्रकृतेश्चैव मिथ्यात्वं साधयन्ति हि ॥
तस्माद्येऽधीतविद्याश्च तथा चैवोत्तमां गतिम् ।
परीक्ष्य लोकान्कर्मचितान्प्रेप्सवो नियतेषणाः ॥
क्षेत्रक्षेत्रज्ञयोगे च सति नित्यत्वलक्षणे ।
भवतां व्यवसायानां शुद्धस्यैवात्मनश्च हि ॥
स्वरूपं च जिज्ञासवो धर्मकामाः शुभाश्रयाः ।
ते स्युः श्रीभगवद्गीताध्ययने ह्यधिकारिणः ॥
इदमनावश्यकं च ह्यावश्यकमिदं भवेत् ।
एतत्स्वाभाविकमिदं न तथेत्थं भवेदिति ॥
तदिदं ब्रह्म नैतच्च ब्रह्मोपास्यं भवेदिति ।
विज्ञानं सर्वविद्याभिर्जायते चाधिकारिणाम् ॥

श्रीभगवद्गीतया हि शुद्धानां चाधिकारिणाम् ।
सर्वमावश्यकं चेति सर्वं ब्रह्मस्वभावजम् ॥
सर्वं तत्खल्विदं ब्रह्म चेति ज्ञानं हि जायते ।
तस्मात् श्रीभगवद्गीता ह्यध्येया स्यादितीर्यते ॥"

इति, सनातनधर्मदीपिकायां श्रीभगवद्गीताख्यविद्यास्वरूपं हि साधिकारं सप्रयोजनं च व्याख्यातं भवति । अन्ये पुनर्हंसाः "अथायमर्जुनः प्रथमं तद्भगवदनुगृहीतः स्वनियतकर्तव्यकर्मानुष्ठानाय संसंभ्रमं संप्रवृत्तोऽपि स्वप्राकृतभावसमुद्भूतस्वार्थाग्रहदोषदुष्टो धर्मसंमूढचित्तश्च क्लैब्यं समापन्नः, ततस्तत्कार्पण्यदोषनिवृत्तिपूर्वकस्वनियतानुष्ठेयधर्मतत्त्वविज्ञानाय तावता तत्क्लैब्यनिवृत्तये च "शिष्यस्तेऽहम्" इत्यात्मानमावेद्यैव तं भगवन्तं च वासुदेवं हि शरणं ययौ । ततश्चैवं शरणागताय पार्थाय भगवान्वासुदेवः प्रथमं हि तत्कार्पण्यदोषमूलालीशानिवृत्तये च 'स्वतन्त्रत्वलक्षणं च परं स्थानम्, तत्परस्थाननियता तत्तदधिकारिनियतानुष्ठेयव्यवसायनायकत्वेनानुस्मर्यमाणा च ब्राह्मी विभूतिः, तद्विभूतिमदधिकारिनियतत्यागसंन्यासः', इति च सर्वं हि साङ्गं व्याख्याय, ततश्च स्वदासभूतार्जुननियतानुष्ठेयधर्मतत्त्वनिश्चयविज्ञानाय सर्वधर्मपरित्यागपूर्वकमेकशुद्धसनातनधर्मस्वीकारं च समुपदिदेश। एवमुपदेशेन हि तत्तदधिकारनियतानुष्ठेयधर्मानुष्ठानप्रतिबन्धकपारतन्त्र्यनाशः, तत्क्लैब्यनिवृत्तिः, पुनः संसरणनिरोधः, इति च सर्वं तत्परस्थानादिविज्ञानप्रयोजनं समुपदिष्टं भवतीत्यवगम्यते । तथैवं

द्येकधर्मस्वीकारेण स्वस्वरूपविज्ञानं च संपूर्णत्वलक्षणं संभवतीति विज्ञायते। एवमुपदेशरूपा च श्रीभगवद्गीता हि योगब्रह्मविद्या भवति। सेयमध्यायानां च चतुर्विंशत्या षट्सप्तत्युत्तरपञ्चशतैः श्लोकैश्च गुम्भिता भवति। अस्याश्च पुनराद्यन्ताध्यायौ हि व्यष्टिसमष्टिस्वरूपप्रणवव्याख्यानपरौ भवतः। ततः सेयं श्रीभगवद्गीता सर्वैरप्यधिकारिभिरध्येया भवति" इति श्रीभगवद्गीतार्थं च संग्रहेण व्याचख्युः। अत्रेदमवधेयम्—पार्थस्तु प्रथमं हि सह च सोदरैर्धर्मपत्न्या च द्रौपद्या तथान्यैराप्तैश्च सत्पुरुषैः, कौरवाणां दौरात्म्यं हि स्वप्राकृतभावसिद्धाभ्युदयप्रणाशकं दुर्यशस्करं च'इदमित्थम्' इति विचारपूर्वकं निश्चित्य, तथा तद्दौरात्म्यनिग्रहोपायं च साधु विज्ञाय, तथा स्वनियतभगवदंशायत्तधर्मपरित्राणप्रकारं तद्विरुद्धधर्मसमुन्मूलनस्वरूपं च साकमेव भगवता श्रीकृष्णेन परिभाव्य च, तद्युद्धकर्मणि प्रवर्तमानः, तदा प्रथमं भगवता ततो योगदेव्या चानुगृहीतस्तावता हि निश्चितात्मविजयश्च सेनयोरुभयोर्मध्यं च साकमेव भगवता समाजगाम, इति बुध्यते। सत्येवं बन्धुजनवधे महनीयाचार्यवधे च कथमसौ पापाद्बिभ्यति? कस्य वा हि जिज्ञासया भगवन्तं वासुदेवं शरणं ययौ? इत्ययं प्रश्नस्तु साधारणो भवति सर्वेषाम्। प्रश्नस्यास्य हि 'तस्यास्यार्जुनस्य यथा वा हि स्वयुद्धप्रवृत्तिश्च स्वनियतप्राकृतभावदृष्ट्या संबभूव, तथैव तद्युद्धनिवृत्तिश्चापि तत्प्राकृतभावदृष्ट्यैव समजायतेति भवति विज्ञेयम्। तद्युद्धप्रवृत्तिनिवृ-

त्योस्तु स्वेप्सिततद्राज्यलाभालाभावेव फले भवतः । अतस्तदर्जुनस्य प्रथमं स्वेप्सिततद्राज्यलाभाय हि युद्धे प्रवृत्तिः, अनन्तरं च बन्धुजनाचार्यादिमहापुरुषवधसञ्जातपापभिया हि स्वेप्सिततद्राज्यालाभाय तद्युद्धान्निवृत्तिश्चापि संबभूव इति, एवं हि प्राकृतफलेप्सया कर्म कुर्वतामधिकारिणाम् "यो वा एतदक्षरं गार्ग्यविदित्वास्मिँलोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति, यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति, स कृपणः, अथ यो वा एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः" इत्यादिश्रुतिभिः कृपणत्वस्य सिद्धत्वेन तथा तदर्जुनस्यापि कार्पण्यदोषदुष्टत्वेन तावता स्वनियतानुष्ठेयधर्मसंमूढचेतस्कत्वेन च तत्कार्पण्यदोषनिवृत्त्युपायविज्ञानपूर्वकं स्वनियतानुष्ठेयधर्मविज्ञानार्थं च सोऽयमर्जुनो भगवन्तं वासुदेवं शरणं ययौ' इत्युत्तरं च विज्ञेयं भवति । एवं तदर्जुनस्य स्वनियतभगवदंशायत्ताधिकारलक्षणकर्मस्वरूपे च युद्धे धर्मस्थापनाय प्रथमं प्रवृत्तिः, ततश्च तस्य स्वलोकधर्मप्रतिनिधिधर्मस्वरूपानुरूपया लोकधर्मभावनया हि बिना च क्षात्रधर्मं बन्धुजनवधे महानुभावाचार्यवधे चानुग्राहकधर्मान्तरादर्शनेन तद्युद्धान्निवृत्तिश्चापि संबभूव । एवंसंभूता प्रवृत्तिर्निवृत्तिश्च तदर्जुनस्य स्वनियतनरस्वरूपदृष्ट्यैव समभवत्, इति विज्ञायते । तन्नरस्वरूपस्यापि वस्तुतः प्राकृतत्वेन तत्सञ्जातप्रवृत्तिनिवृत्तिफलस्यापि प्राकृतत्वमेवेति विज्ञेयं भवति । ततश्च भगवदंशभूतस्यापि तदर्जुनस्य प्राकृतफलार्थित्वेन कृपणत्वं च

सिद्धमेव। ततश्च पार्थः स्वनियतकार्पण्यदोषनिवृत्तिपूर्वकस्वनियतानुष्ठेयधर्मतत्त्वविज्ञानाय भगवन्तं वासुदेवं शरणं ययौ, इति च विज्ञायते। ततश्चाधिकारिणां स्वस्वरूपानुरूपा प्रवृत्तिर्निवृत्तिश्च स्वार्थाग्रहदोषदुष्टैव भवति, स्वस्वभावानुरूपा प्रवृत्तिर्निवृत्तिस्तु न च भवति स्वार्थाग्रहाग्रस्त इति विज्ञायते। अत एव भगवता तत्तदधिकारिभिरनुष्ठीयमानानां च कर्मणां स्वभावजत्वेनैव श्रैष्ठ्यं च "स्वभावजम्" इति स्वार्थाग्रहाग्रस्तत्वेनैव व्याख्यातं भवति। अतश्च भगवतात्मगीतायाम् "यतः प्रवृत्तिर्भूतानाम्" इति स्वात्मस्वरूपब्रह्मण एव सर्वकर्मसमाराध्यत्वमुपदिश्यते। अत्र तदात्मस्वरूपब्रह्मविज्ञानपूर्वकमेव सर्वेषां चाधिकारिणां कर्मानुष्ठानं विधीयते, इति भावः। अत एव "शुद्धात्मस्वभावदृष्ट्या क्रियमाणत्वमेव कर्मणां स्वभावजत्वम्" इति विज्ञायते। तथा च प्रकृते तदर्जुनस्य युद्धे प्रवृत्तिः, तथा युद्धान्निवृत्तिश्च भवति स्वरूपजा, न तु स्वभावजा, इति विवेकः। ततश्चाधिकारिणां स्वस्वरूपानुरूपा प्रवृत्तिर्निवृत्तिश्च प्राकृतभावदृष्ट्यैव भवति, इति विज्ञायते। अत एव च "युयुत्सितं न प्रतिभाति किंचित्" इति प्रामाणिकोपदेशः। अत्र प्राकृतफलेप्सया कर्म कुर्वतां विना च तत्फलानुभवविज्ञानं विज्ञेयान्तरादर्शनं चावगम्यते। तस्मादस्यार्जुनस्य युयुत्सा तदभावश्च स्वार्थाग्रहदोषदुष्टा भवति, इति। अतश्चेत्थम्—

"तव धर्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः।
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत्॥

न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशांपते ।
आहुराश्रमिणः सर्वे न भैक्षं क्षत्त्रियश्चरेत् ॥
जयो वधो वा सङ्ग्रामे धात्रादिष्टः सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥
न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।
विक्रमस्व महाबाहो जहि शत्रून्परन्तप ॥
मानवानां च सर्वेषां तथान्येषां च पार्थिव ।
कार्पण्यमेवाधिकारिकार्यनाशाय जायते ॥
ब्राह्मणैः क्षत्त्रियैर्वैश्यैः शूद्रैश्चैवाधिकारिभिः ।
कर्मसु क्रियमाणेषु दोषः कार्पण्यलक्षणः ॥
दृश्यते स च राजेन्द्र स्वेप्सितार्थस्य सिद्धये ।
परिहार्यो भवेद्बुद्ध्या समदृष्ट्या विशांपते ॥"

इति महाभारते भगवता धर्मसूनुं प्रत्युपदिष्टमिति विज्ञायते। अत्र 'न हि कार्पण्यमास्थाय शक्या वृत्तिः' इत्यनेन प्रवृत्तिधर्मो वा निवृत्तिधर्मश्च वा कार्पण्यदोषग्रस्तैर्यथावदनुष्ठातुं न शक्यते, यतोऽयं क्लैब्यकारणं भवति, इत्युक्तं भवतीति ज्ञेयम् । तथा च नित्यत्वापापविद्धत्वशुद्धत्वाद्यात्मगुणविज्ञानिनां स्वप्रकृतिसहजकर्मणामनुष्ठेयत्वेनैव विधानात्तादृशकर्मानुष्ठानादेव शाश्वतस्य च मोक्षस्य संभवाच्चायं दोषः परिहार्य इति भावः । अत एव यथाधर्मदर्शनवचनं साङ्गं च क्रियमाणात्स्वरूपानुरूपाच्च कर्मणः, साङ्गमननुष्ठितस्यापि स्वभावनियतकर्मण एव श्रैष्ठ्यं च भगवता "श्रेयान्स्वधर्मो

विगुणः" इति समुपदिष्टमिति विज्ञायते । ततश्च भारतकारिकाया-
मित्थम्—

आत्मनो न स्वभावेन बन्धमोक्षौ शुभाशुभे ।
सुखदुःखे पुण्यपापे भवतः किन्तु ते च हि ॥
स्वरूपेण च तच्चैव गुणकर्मकृतं भवेत् ।
तद्भवेत्प्राकृतं चेति श्रुतिभिः समुदीर्यते ॥
ततः प्राकृतदृष्ट्या हि भवेतामात्मनश्च ते ।
आत्मदृष्ट्या तु सर्वत्र भवेदात्मामलः स्वयम् ॥
शुद्धदृष्ट्या भवेदात्मा सर्वकृत्सर्ववित्तथा ।
समदुःखसुखः स्वस्थो गतिद्वयविवर्जितः ॥
तस्मात्कर्मसु सर्वेषु क्रियमाणेषु धर्मतः ।
स्वभावजा शुद्धनिष्ठा प्रशस्तास्त्यविकारिणाम् ॥
यथा चैव हि काणश्च न रूपं पश्यति स्वयम् ।
यथा हि बधिरो वाचं न शृणोति तथैव हि ॥
स च विद्वान् शुद्धनिष्ठो न जानाति शुभाशुभे ।
सुखदुःखे पुण्यपापे बन्धमोक्षौ च तत्त्वतः ॥
ततश्चोच्चावचफलान्यखिलानि यथाविधि ।
कुर्वन्नेवेह कर्माणि शुद्धस्तैर्न च लिप्यते ॥
ततश्चेत्थं धर्मगुप्तं रहस्यं च सनातनम् ।
शुद्धं चैव हि विज्ञेयं सर्वैश्चैवाधिकारिभिः ॥

तपस्वी शक्तिजः शुद्धो महर्षिश्च पराशरः।
तस्यात्मजश्च भगवान्व्यासः सत्यवतीसुतः ॥
अकार्यमपि सर्वार्थं धर्मसेतुकरं शिवम् ।
कर्म तौ शुद्धनिष्ठौ च चक्रतुः शुभलक्षणौ ॥
इति तस्माच्छुद्धनिष्ठा सर्वेषां चाधिकारिणाम् ।
मुख्या स्यात्परमा चेति विज्ञेयं धर्मगामिभिः ॥
न चैव शुद्धनिष्ठानां सुखदुःखे च कर्मजे ।
भवेतां स्वार्थदोषेण चेति शुद्धार्थनिश्चयः ॥"

इति भगवता गोभिलेन स्वरूपानुरूपकर्मणः स्वभावानुरूपकर्मानुष्ठानस्यैव श्रैष्ठ्यं च व्याख्यातं भवति । अन्ये च हंसाः "अथ च भगवान्व्यासः—समुचिते च समये स्वार्थविशेनानीशया च विनष्टकर्तव्याकर्तव्यनिश्चयविज्ञानस्य स्वनियतां भावाभावनिष्ठां च सम्यक्परीक्षया हि संशोध्य 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्' इति श्रुतिसिद्धं च महान्तं निर्वेदं समापन्नस्य ततो न किमपि परप्राप्तिकारणं च पश्यतः स्वनियतस्वार्थविशानीशाविनाशकमहाधर्मतत्त्वविज्ञानाय महान्तं च गुरुमन्वेषमाणस्य च राज्ञो धृतराष्ट्रस्य समीपं हि दैवनियोगादेव समेत्य, तेन च यथाविधि महाधर्मसिद्धशुद्धनिष्ठोपदेशाय संप्रार्थितश्च ततस्तस्मै च राज्ञे प्राकृतात्मीयभावसिद्धं प्रवृत्तिनिवृत्तिलक्षणं च धर्मं प्रकृतार्थानुबन्धिनं हि प्रीत्या सरहस्यं समुपदिश्य, तावता हि तद्धृतराष्ट्राभिमतमहाशान्तिलक्षणसिद्धिं चापश्यन्, तथा तस्य

राज्ञः परिप्रश्नपराधिकारिशिष्यलक्षणं च धर्मं हि परिभाव्य, तस्मै च राज्ञे महाशान्तिप्रदशुद्धसनातनधर्मतत्त्वोपदेशार्थं पुनर्दिव्यदृष्टिमन्तं योगिनं च सञ्जयं तस्य चैव राज्ञः सविधे निधाय, यथागतं गतः, इति प्रथमं विज्ञायते । अथ च सञ्जयः तस्य चैव राज्ञः स्वार्थाग्रहस्य तदनीशायाश्च निवर्तकं धर्मं च समुपदिदिक्षुः, तस्मै च राज्ञे ब्रह्मणः परमात्मस्वरूपस्य च क्षरमक्षरं च स्वरूपं परप्राप्तिकारणज्ञानलक्षणं च समुपदिशतिस्म । ततश्च तदनेनोपदेशेन तस्य च राज्ञः संक्षुब्धहृदयत्वं च तदवस्थमेवास्तीति "धर्मक्षेत्रे कुरुक्षेत्रे" इति तद्राज्ञः प्रश्नेनैव विज्ञाय, तस्मै च पुनः साङ्ख्ययोगात्मिकां गायत्रीलक्षणां त्रित्वैकत्वप्रकारकब्रह्मसंसारस्वभावस्वरूपव्याख्यानपरां काण्डद्वयोपेतां 'सर्वमावश्यकं सर्वं ब्रह्मस्वभावजं सर्वं तत्त्वमस्यिदं ब्रह्म' इति शिक्षालक्षणां सर्वधर्मपरित्यागपूर्वकं चैकधर्मस्वीकारस्य विधायिनीं च योगब्रह्मविद्यां हि 'स्वांशभूतायार्जुनाय भगवता पार्थसारथिना च श्रीकृष्णेन समुपदिष्टाम् "दृष्ट्वा तु पाण्डवानीकम्" इत्यारभ्य "यत्र योगेश्वरः कृष्णः" इत्यन्तैश्च तदर्जुनभगवदुक्तिप्रत्युक्तिलिङ्गैस्तथातद्भगवन्महिमाभिज्ञब्रह्मस्तुतिसमुपहितैश्च श्लोकैश्चतुश्चत्वारिंशदधिकसप्तशतैश्च समुपदिदेश, इति विज्ञायते । 'संपूर्णप्रकृतिमण्डले चैकस्मिन्पुरुषे यौ च पुनर्भवतस्तदात्मानात्मभावौ, तयोः सत्त्वं चावगम्यते । तत्तदधिकारिणां च पुरुषाणां स्वनियतानुष्ठेयव्यवसाये च सति कर्तव्ये तदभिवर्णितात्मानात्मभावयोरन्यतरस्य मुख्यत्वं हि

सर्वानुभाव्यम् । यश्च विजयी भावः, स च भवति मुख्यः । तदैव पुनर्भावो विजयी भवति, यदा पुनस्तस्य शुद्धसनातनभावाभियोगश्च भवति । ततश्च जयापजयलक्षणभावयोः स्वरूपम्, जयापजयलक्षणव्यवसायानुगतधर्मस्वरूपम्, जयापजयमूलभावस्वरूपम्, जयापजयविशिष्टाधिकारिस्वरूपम्, इति च सर्वं सर्वैरप्यधिकारिभिर्विज्ञेयं भवतीति बुध्यते । अत्र च पुनरात्मभावेन स्वनियतानुष्ठेयव्यवसायं च समाचरतां तदनात्मभावेन हि स्वनियतव्यवसाये च कर्तव्ये क्लैब्यं च संभवतीति, एवमनात्मभावेन स्वनियतानुष्ठेयव्यवसायं च समाचरतां तदात्मभावेन हि स्वनियतव्यवसाये च कर्तव्ये क्लैब्यं च सञ्जायते, इति च विज्ञेयं भवति । किं च गुणकर्मचिह्नितं च प्राकृतं तदनात्मभावमवलम्ब्य प्रवृत्तिपरव्यवसायं हि समाचरन्तश्च ज्ञानिनो भक्ताः कर्मठाश्च भवन्ति, केवलगुणचिह्नितमात्मीयं च भावमवलम्ब्य निवृत्तिपरं च व्यवसायं हि समाचरन्तश्चात्मनिष्ठा भवन्ति, इति विज्ञायते । तदात्मनिष्ठाश्चापि ज्ञानिनो भक्ताः कर्मठाश्च भवन्ति । ततस्तदात्मनिष्ठानात्मनिष्ठयोश्च दृष्टिभेदेऽपि ज्ञानभक्तिकर्मव्यवसायपरत्वं च सममेवेति निश्चयः । तदेतेषां चाधिकारिणां परस्परं स्वभावसिद्धं च युद्धं भवतीति, तद्युद्धे च जयश्च शुद्धभावेन भवतीति च विज्ञायते । सनातनो भवत्ययं हि नियमः । तस्माच्च तदभिवर्णितास्त्वयो भावाश्च मुमुक्षुभिः परप्रेप्सुभिश्चाधिकारिभिर्विज्ञेया भवन्ति,' इति धृतराष्ट्रप्रश्नाशयो विज्ञायते । ततः सञ्जयेन यथा

प्रश्नं तस्मै च राज्ञे धृतराष्ट्राय प्रवृत्तिनिवृत्तियोगलक्षणा भावत्रयाभिसिद्धाः शुद्धसाङ्ख्याधिकारनियताश्च त्रयो धर्माः, शुद्धयोगाधिकारिसिद्धः सर्वधर्मपरित्यागपूर्वकैकधर्मस्वीकारलक्षणश्च योगधर्मः, इति धर्मद्वयं हि समुपदिष्टं भवतीति विज्ञेयम्" इति श्रीभगवद्गीतासंग्रहार्थं च व्याचख्युः। अपरे च हंसाः "धर्मक्षेत्रे कुरुक्षेत्रे" इति स्वार्थाग्रहदोषनिवृत्तये तत्त्वं च शुद्धं पृच्छते च राज्ञे धृतराष्ट्राय योगी च सञ्जयः "यत्र योगेश्वरः कृष्णः" इति शुद्धं च तत्त्वं तद्व्यवसायप्रकारं तद्व्यवसायफलं च समुपदिदेश। यस्मिंश्च विज्ञाने विषयभूतं व्यवसायनायकं शुद्धं च ब्रह्मस्वरूपं भवति, तस्मिन्नेव विज्ञाने 'श्रीः विजयः भूतिः नीतिः' इति सर्वं चाच्युतमनवद्यं भवति। एवं यस्मिंश्च व्यवसायेऽधिकारी योगब्रह्मविद्याभिशिक्षितो भवति, तस्मिन्नेव व्यवसाये 'श्रीः विजयः भूतिः नीतिः' इति सर्वमच्युतमनवद्यं च भवति। अत्र च श्रीप्रभृतीनां चतुर्णां यथाक्रमं योगसंन्यासब्रह्मभूतिविज्ञानानि वाच्यानि भवन्ति। 'श्रीप्रभृतय एव चत्वारः श्रीभगवद्गीतायाश्च तत्तत्षट्कचरमश्लोकैश्च प्राप्यफलत्वेन व्याख्याता भवन्तीति "यत्र योगेश्वरः कृष्णः" इति श्लोकस्यार्थो भवति विज्ञेयः। ततः "दृष्ट्वा तु पाण्डवानीकम्" इत्यारभ्य "तच्च संस्मृत्य संस्मृत्य" इत्यन्तं च श्रीभगवद्गीतागर्भं सञ्जयोक्तं सर्वमपि तदुपपादितस्य "यत्र योगेश्वरः कृष्णः" इत्यस्य व्याख्यानपरमेवेति विज्ञेयम्। ततश्च प्राकृतदृष्ट्यात्मीयदृष्ट्या वा स्वनियतानुष्ठेयधर्मांश्च यथाविधि

समाचरतां सर्वेषां चाप्यधिकारिणां स्वधर्मानुष्ठानसमये हि 'स्वकीयत्वाभाववति स्वकीयत्वबुद्धेः प्रवर्तकस्य स्वार्थाग्रहदोषस्य' संभवात्तद्ब्रह्मपरया शुद्धदृष्ट्या तु स्वधर्ममनुतिष्ठतामधिकारिणां तदभिवर्णितस्वार्थाग्रहदोषाभावदर्शनाच्च सेयं शुद्धब्रह्मतत्त्वव्याख्यानपरयोगब्रह्मविद्यास्वरूपा च श्रीभगवद्गीता ब्रह्मपरशुद्धदृष्ट्यधिकार्यनुष्ठेयधर्मविधायिनी भवतीति सिद्धान्तः। किं चैवमेव "कार्पण्यदोषोपहतस्वभावः" इति स्वस्य कार्पण्यदोषोपहतस्वभावत्वम्, तावता च धर्मसंमूढचेतस्कत्वं च, समावेद्य "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति स्वस्वरूपविशेषविज्ञापनपूर्वकं स्वनियतानुष्ठेयधर्मानुष्ठानप्रतिबन्धकस्वार्थाग्रहदोषनिवृत्तये शुद्धतत्त्वविज्ञानाय च शरणागताय पार्थाय, भगवान्वासुदेवश्च "सर्वधर्मान्परित्यज्य" इत्येकेन दिव्येन च श्लोकेन महार्थेनैव हि स्वार्थाग्रहदोषदुष्टैः सर्वैश्चाधिकारिभिर्विज्ञेयं शुद्धं योगलक्षणं च धर्मं समुपदिदेश, इति विज्ञेयं भवति। एवम् "अशोच्यानन्वशोचस्त्वम्" इत्यारभ्य "तमेव शरणं गच्छ" इत्यन्तं च तद्भगवदुपदिष्टं सर्वमपि तदभिवर्णितस्य "सर्वधर्मान्परित्यज्य" इत्येतस्य व्याख्यानरूपमेवेति विज्ञेयम्। तस्मात् श्रीभगवद्गीताशास्त्रं सर्वेभ्योऽपि शास्त्रेभ्यो विलक्षणं परप्राप्तिविरोधिस्वार्थाग्रहदोषनिवृत्त्युपायविधानपूर्वकं शुद्धधर्मविधायकमुत्तमं योगब्रह्मविद्यास्वरूपं च शास्त्रं भवति" इति श्रीभगवद्गीतार्थसंग्रहं च व्याचख्युः। अन्ये च पुनर्हंसाः "सेयं योगब्रह्मविद्यास्वरूपा हि श्रीभगवद्गी-

ता परप्राप्तिलक्षणयोगस्वरूपब्रह्मसामीप्यपञ्चमपुरुषार्थप्राप्त्युपाय-भूतान्षट्प्रकारांश्चतुरो धर्मांश्चाधिकारिणः शास्ति । सैषा भवति काण्डद्वयी। अस्याश्च पुनः पूर्वकाण्डेन ज्ञाननिष्ठालक्षणो भक्ति-निष्ठालक्षणः कर्मनिष्ठालक्षणश्चेति षट्प्रकारास्त्रयो धर्माः, उत्तर-काण्डेन तु षट्प्रकारो योगनिष्ठालक्षणो धर्मश्च व्याख्याता भवन्ति। यद्यपि स हि धर्मः सुपर्याप्तो नित्यः शुद्धश्च सनातनो भवति तदभिर्णितपञ्चमपुरुषार्थप्राप्त्युपायभूतः शुद्धदृष्ट्यधिकारि-सेव्यत्वेन नियतश्चैक एव, तथापि सति च क्षेत्रक्षेत्रज्ञविज्ञाने हि प्रवृत्तिनिवृत्तिपरसंसारव्यवसायनियतधर्मव्याख्यानावश्यकत्वात्त-दभिवर्णितधर्माणां हि तदभिवर्णितसर्वधर्मानुष्ठानसञ्जातसंन्यास-त्यागपूर्वकशुद्धदृष्ट्यधिकारिसंसेव्यशुद्धसनातनधर्मे चैवोपसंहारद-र्शनात्तादृशशुद्धसनातनधर्मस्यैव सुपर्याप्तत्वात्परमपञ्चमपुरुषार्थ-प्राप्त्युपायभूतत्वाच्च तदभिवर्णितसर्वधर्माणां परमपञ्चमपुरुषार्थ-प्राप्त्युपायत्वकथनमपि च युक्तमेवेति विज्ञेयम् । ततश्च प्र-वृत्तौ ज्ञानव्यवसायनियतानां च षण्णां धर्माणां मानसव्यवसा-यनियतेषु षट्सु धर्मेषु, तेषां च कर्मव्यवसायनियतधर्मेषु षट्सु च, समन्वयश्च भवति । एवं निवृत्तौ कर्मव्यवसायनियतधर्माणां मानसव्यवसायनियतधर्मेषु, तेषां च ज्ञानव्यवसायनियतधर्मेषु च समन्वयश्च बुध्यते । एवमेव प्रवृत्तिनिवृत्त्युपहितानां तेषां त्रया-णां च धर्माणां तुरीययोगव्यवसायनियतेषु च षट्सु धर्मेषु सम-न्वयश्चापि विज्ञेय इति सिद्धान्तः । तत एव हि 'यथा वा हि

नानारूपमन्नं प्राणिभिर्भुज्यमानं चैकरसतामासाद्य जीवधारकं भवति, यथा च गोभुक्तं च तृणजातं हि स्वनियतरूपरसादिकं विहाय विजातीयरूपरसदुग्धतां च व्रजति, यथा च पुनरात्मा तदन्नरादिभेदेन देवमनुष्याद्युपाधिभेदेन शैशवाद्यवस्थाभेदेन सत्त्वादिगुणभेदेन देवासुरस्वभावभेदेन नानास्वरूपोऽपि शुद्धश्चैको भवति, यथा वा ब्रह्मव्यष्टिभावोपहितं च समष्टिभावोपहितं शुद्धं-चेति श्रूयते, यथा वा हि सर्वाणि दर्शनानि तत्तद्विषयपराणि च ब्राह्मदर्शनानि भवन्ति, यथाकारोकारमकारात्मकश्च शब्दो भवत्योङ्कारशब्दस्वरूपः; तथैव हि सर्वो धर्मश्च शुद्धसनातनधर्मस्वरूपो भवतीति शुद्धदृष्टिभिर्विज्ञेयं भवति। ततश्च ज्ञानभक्तिकर्मव्यवसायोपहितास्त्रयश्चाधिष्ठानधर्माः करणधर्माः कर्मधर्माः कर्तृधर्माः परमकारणधर्माः प्राप्यधर्माश्चेति षडेते धर्माः प्रवृत्तिनिवृत्तिपरगत्या हि समीकृतस्वभावाश्च तुरीययोगव्यवसायोपहितेषु स्वस्वरूपानुरूपेषु च षट्सु धर्मेषु समीकृतभावेषु च युक्ताः शुद्धैकसनातनधर्मस्वरूपं चाभिसंपद्यन्ते, इति हि समवगम्यते। अत एव च "आपूर्यमाणमचलप्रतिष्ठम्" इति भगवदुपदेशेन सर्वेषां च धर्माणामेकस्मिन्नुपसंहारश्चावगम्यते। ततश्चैव प्रवृत्तिपराणां ज्ञानभक्तिकर्मव्यवसायनियतानां च धर्माणां संन्यासधर्मे च भवत्युपसंहारः, निवृत्तिपराणां च तेषां धर्माणां शुद्धज्ञानकैवल्यधर्म एव भवत्युपसंहारश्चेति विज्ञायते। एवं तदभिवर्णितप्रवृत्तिनिवृत्तिपरज्ञानादिव्यवसायनियतानां च धर्माणां भवत्युपसंहारश्च शाश्वते

योगकैवल्ये च प्राप्तिलक्षणे, इति च विज्ञायते । अत एव च क्षेत्रज्ञस्यात्मनो ब्रह्मस्वरूपस्य च व्यवसायपरस्य गतित्रयोपहितं स्वरूपमुपसंहारलक्षणं च "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति भगवदुपदिष्टं भवतीति विज्ञायते । अत्र 'तत्' इत्यनेन प्रवृत्तिपरव्यवसायोपसंहारपरं संसारनायकं च ब्रह्मस्वरूपम्, 'सत्' इत्यनेन निवृत्तिपरव्यवसायोपसंहारपरं संसारनायकं च ब्रह्मस्वरूपम्' 'ॐ' इत्यनेन शुद्धव्यवसायोपसंहारपरं संसारनायकं च ब्रह्मस्वरूपम्' इति त्रिविधं व्याख्यातं भवति। अतश्चैव "सर्वधर्मान्परित्यज्य" इत्युच्यते । अत्र परित्यागश्चोपसंहारलक्षणः । अतश्च सर्वधर्मान्ब्रह्मण्युपसंहृत्य शुद्धधर्मः सनातनश्चैकः स्वीकार्य इत्युच्यते । तस्मात्सर्वेषां च धर्माणां शुद्धसनातनधर्मे समन्वयश्च भवतीति सिद्धान्तः" इति श्रीभगवद्गीतार्थसंग्रहं च व्याचख्युः । अन्ये पुनश्च हंसाः "सेयं हि श्रीभगवद्गीता समष्टिव्यष्टिस्वरूपप्रणवार्थव्याख्यानपरयोगब्रह्मविद्यास्वरूपा भवति। अस्याश्च पुनर्गायत्री "सर्वधर्मान्परित्यज्य" इति चतुष्पदी भवति, "सर्वं ब्रह्मस्वभावजं, सर्वमावश्यकं, सर्वं तत्खल्विदं ब्रह्म" इति तु महावाक्यं भवति । एवं गायत्रीमहावाक्योपहिता योगब्रह्मविद्या तत्तदधिकारिणां परप्राप्तये च नियतानुष्ठेयधर्मांश्च स्वार्थाग्रहदोषनिवर्तकान्व्याख्याति" इति श्रीभगवद्गीतार्थसंग्रहं च व्याचख्युः इति । इत्थमुपपादिता हंसोक्तार्थाश्च श्रीभगवद्गीतार्थबुभुत्सुभिरधिकारिभिः प्रथमं विज्ञेया

